# व्यावहारिकं संस्कृतम्

## प्रथमम् पुस्तकम्

पथिकृत्
शिवराज आचार्यः कौण्डिन्न्यायनः
आचार्यः, एम्.ए., विद्यावारिधिः (पि-एच्.डि.), वाचस्पतिः (डि.लिट्.)

रचयिता
प्रमोदवर्धनः कौण्डिन्न्यायनः मीमांसाचार्यः

स्वाद्ध्यायशाला
२०५०

प्रकाशकम्-

स्वाद्ध्यायशालाकुटुम्बम्

प्रथमं संस्करणम्- २२०० पुस्तकानि
२०५०

मूल्यम् २०।- (विंशतिः)

पुस्तकप्राप्तिस्थानम्-

स्वाद्ध्यायशाला

च. २/४१९, सरस्वतीमार्गः,

लाजिम्पाट् ,काष्ठमण्डपनगरम्-२,

नेपालदेशः ।

दूरस्वनः ४१०३२७

---

मुद्रकः - जयनेपाल-अफिससपोर्ट-मुद्रणालयः, रामशाहपथः, दूरस्वनसङ्ख्या २२२४७४

# विषयानुक्रमणिका

# भूमिका*

## १. संस्कृत-वाङ्मयस्य महत्त्वम्

भूमण्डलस्य यस्मिन्कस्मिन्नपि भागे निवसतां सर्वेषां मानवानां कृते संस्कृतवाङ्मयस्य प्रभूतं महत्त्वमस्तीति सुविदितमेव ।

संस्कृते विद्यानां विविधा विधाः प्राप्यन्ते । *वार्ताया विद्यायाः* कृषिशास्त्रम् , पशुशास्त्रम् , वाणिज्यशास्त्रम् स्थापत्यशास्त्रम् ,आयुर्वेदशास्त्रम् इत्यादीनि अनेकानि शास्त्राणि, *त्रय्या विद्याया* वेदवेदाङ्गस्मृतिपुराणेतिहासादीनि धर्ममीमांसा-ब्रह्ममीमांसादीनि च शास्त्राणि, *दण्डनीत्या विद्याया* नीतिशास्त्रम् , प्रशासनशास्त्रम् , धनुर्वेदशास्त्रम् (आयुधशास्त्रम् , युद्धशास्त्रम्) इत्यादीनि शास्त्राणि, *आन्वीक्षिक्या विद्यायास्* तर्कशास्त्रम् , पदार्थशास्त्रम् ,साङ्ख्य शास्त्रम् , योगशास्त्रमित्यादीनि शास्त्राणि च संस्कृतवाङ्मये सन्ति । महाकविभासकालिदासादिप्रणीताः काव्य-नाट्यकथाख्यायिकादिरूपा ललितकलाप्रधाना नानाविद्यासिद्धान्तगर्भा अनेके ग्रन्थाश्च संस्कृत-वाङ्मये सन्ति ।

एवं मानवानां कृते सार्वजनिकनिधिरूपेण स्थितं संस्कृतवाङ्मयमेतस्मिन् कोलाहलपूर्णे आधुनिके मानव-समाजे नैतिकताया मानवताया विश्वबन्धुतायाश्च प्रसारे महत्त्वपूर्णं भवितुं शक्नोतीति संस्कृतवाङ्मयस्योपनिषद्-गीतादिग्रन्थानां स्वल्पमपि परिचयं प्राप्तवता जनानामतिरोहितम् । मानवजीवन-रहस्यान्वेषणे संस्कृतवाङ्मयस्य सर्वोपकारकत्वमपि सुविदितमेव । वैदिक-सनातन-वर्णाश्रमधर्मानुयायिनां कृते तु वेदवेदाङ्गादि-संस्कृतवाङ्मयस्य महत्त्वं वर्णनातीतं वर्तते । हिन्दुभिः सह वर्तमानस्य वेदवेदाङ्गादि-संस्कृत-वाङ्मयसम्बन्धस्य सर्वथा विच्छेदः क्रियते तर्हि हिन्दूनां हिन्दुत्वमेवापगच्छति । हिन्दूना जन्मनः प्रभृति मरणं यावत् सर्वे धार्मिक-क्रियाकलापा वेदवेदाङ्गादि-सस्कृतवाङ्मयस्य एव आधारे संस्कृतभाषाया एव प्रयोगेण चैव क्रियन्ते ।

भारतवर्षनिवासिनां वैदिकानामार्याणां राष्ट्रियतायाः स्रोतो वेदादेव प्रवहति । तेषां नैतिकता संस्कृत-वाङ्मयेनैव प्रकाशिता भवति । तेषां मूलजीवनपद्धतिर् वेदैर्वेदाङ्गैश्चैव निर्दिष्टाऽस्ति । तेषामनादिकालात् प्रभृति प्रचलन्त्या विशिष्टायाः शिक्षापद्धतेः परम्परां स्थिरां कृत्वा तेषां राष्ट्रियतां बलीयसीं कर्तुं तेषां गौरवं वर्धयितुं च संस्कृतविद्यापरम्पराया विशिष्टा भूमिका भवति । तस्मात् तेषां कृते संस्कृतवाङ्मयस्य विशिष्टं महत्त्वमप्यस्ति ।

नेपालदेशनिवासिनां कृतेऽपि संस्कृतस्य महत्त्वं प्रभूतमस्ति । नेपाल-देशस्य राष्ट्रभाषा संस्कृतमूलाऽस्ति । तस्याः समृद्धये संस्कृतस्यावश्यकता विद्यते । नेपालस्य धर्मसंस्कृति-प्रशासन-कलाकौशलादिसम्बद्धस्य इतिहासस्य महत्त्वपूर्णोंऽशः संस्कृतभाषायामेव सुरक्षितो वर्तते । नेपालवासिषु मध्ये प्रभूततरेषु मनुष्येषु धर्मभावनायाः सांस्कृतिकभावनायाः नैतिकतायाः कलात्मकानुभूतेश्च सम्पादने चरित्रबलस्य अभिवर्धने च संस्कृतवाङ्मयस्य नितान्तमावश्यकता वर्तते । दैनन्दिनजीवनयात्रायाः कृतेऽपि बहुसङ्ख्यका नैपाला जना संस्कृतवाङ्मयज्ञानम् अपेक्षन्ते । तद् यथा, नैपाला जनाः

१) दैनन्दिनव्यवहारनीतेर् ज्ञानं कर्तुं हितोपदेश-पञ्चतन्त्र-चाणक्यनीतिदर्पणादीन् ग्रन्थानपेक्षन्ते ।

२) स्वधर्म-दर्शनज्ञानाय वेद-वेदाङ्ग-स्मृति-पुराण-रामायण-महाभारत-गीतादिग्रन्थानपेक्षन्ते ।

३) आयुर्वेद-ज्योतिषादिप्राच्यविज्ञानाध्ययने संस्कृतभाषाया लिखितानां ग्रन्थानामुपयोगं कुर्वते ।

४) संस्कृतपदपदार्थज्ञानेन नैपालीयभाषायाः प्रयोगे नैपुण्यं प्राप्नुवन्ति ।

५) नित्यनैमित्तिकादिकर्मसु आवश्यकानां वैदिकानां पौराणानां वा मन्त्राणां शुद्धरूपेणोच्चारणं शिक्षितुं संस्कृतपठनस्योपयोगं कुर्वते ।

संस्कृतवाङ्मयस्थविद्यानां परम्परायाः संरक्षणे समर्थानां विशिष्टानां शिक्षकाणाम् , साधारणशिक्षां प्राप्तवता जनेन कर्तुं शक्यानि समाजसेवाया राष्ट्रसेवायाश्च विविधानि कार्याणि कर्तुं समर्थाना स्वीय-धर्मसंस्कृति परम्पराचारविचारादरवतां संस्कृतवाङ्मय-परिचययुतानां संस्कृतमूलक-साधारणशिक्षां प्राप्तवतां समाजसेवकानां राष्ट्रसेवकानां राष्ट्रनीतिसम्बद्धकार्य-कर्तृणां राष्ट्रनेतृणां च नेपालदेशे परमावश्यकता वर्तते । एतस्मात् कारणात् नेपालवासिनां कृते संस्कृतवाङ्मयस्यातीव महत्त्वं वर्तत इति स्पष्टं भवति ।

अतः स्वम् आदर्शम् , धर्मम् , दर्शनम् , संस्कारम् , आचारम् , विचारम् , व्यवहारम् , वेषम् , स्वा भाषाम् , भूषाम् , नीतिम् , संस्कृतिम् , स्वराष्ट्रम् , स्वगौरवम् , स्वाभिमानञ्च रक्षितुमिच्छद्भिस् तेषु विषयेषु

---

* एषा भूमिका शिक्षकाणाम् , अभिभावकानाम् , शिक्षाविदाञ्च कृते वर्तते, न तु विद्यार्थिनाम् । विशेषतस्तु एषा भूमिका शिक्षकाणां कृते वर्तते । तस्मात् शिक्षकैः पूर्वमेता भूमिका पठित्वा संस्कृतभाषोच्चारणरीतिं पठनपाठनप्रक्रियां च बुद्ध्वा सामान्यतया एतदनुसारमेव शिक्षणं कर्तव्यम् ।

रममाणैश्च सर्वैर् भारतवर्षीयैरार्यैर् जनै:, विशेषतो नैपालैर् जनै: संस्कृतशिक्षाया विकासाय विस्ताराय सुदृढीकरणाय च यतितव्यम् । तादृशैर् जनैस् सह सामञ्जस्यपूर्णां स्वीयां जीवनयात्रां सञ्चालयितुमिच्छुकैरन्यैश्च जनैस् तत्र साहाय्यं कार्यम् ।

## २. अस्या: व्यावहारिक-संस्कृत-पाठ्यपुस्तकमालाया: प्रकाशने उद्देश्यम्

एषा व्यावहारिक-संस्कृत-पाठ्यपुस्तक-माला मुख्यतया संस्कृतभाषाया: शिक्षणार्थैव निर्मिता वर्तते । एतस्या: पठनेन नैपालीयाद्याधुनिक-भारतवर्षीय-भाषाणा परिष्कृते प्रयोगेऽपि क्षमता वर्धते । एषा व्यावहारिक-संस्कृत-पाठ्यपुस्तकमाला प्रथमादिदशमान्तानां कक्षाणां कृते लिख्यते । एतस्या: सम्पूर्णाया मालाया अध्ययने कृते जना: शास्त्रीयं व्यावहारिकं च संस्कृतं बोद्धुं व्याहर्तुं लेखितुं च समर्था भवन्ति । पञ्चमकक्षापर्यन्तमेतस्या: संस्कृतपाठ्यपुस्तकमालाया: पठनेन षष्ठकक्षायां संस्कृत-माध्यमिक-विद्यालये प्रवेशे सुकरता च भवति ।

अस्माकं मते संस्कृतशिक्षाया: *(१) धर्मदर्शनशिक्षा- (२) वेदवेदाङ्गस्मृतिपुराणादिशास्त्रशिक्षा- (३) ज्योतिषायुर्वेदादि-प्राच्यविज्ञानप्रविधिशिक्षा- (४) संस्कृतग्रन्थमूलकसर्वजनोपयोगि-साधारणशिक्षारूपाश्* चत्वार: पक्षा: सन्ति । तेषां सर्वेषां पक्षाणामनुकूलतया प्रमुखतया साधारणशिक्षाङ्गरूपा एषा माला प्रकाश्यमाना वर्तते । एवञ्च संस्कृतभाषाया: प्रचारणम् , स्वधर्मसंस्कृतिज्ञानविज्ञान-कलासाहित्यसंरक्षणम् , संस्कृत-शिक्षा-विकास-विस्तार-सुदृढीकरणमेवास्या: पुस्तकमालाया: प्रकाशन उद्देश्यम् ।

## ३.व्यावहारिकसंस्कृतपाठ्यपुस्तकमालाप्रकाशनकोषव्यवस्था

एतस्या: पुस्तकमालाया: प्रकाशनाय प्रारम्भे संस्कृतशिक्षाप्रेमिणां दानेनैव कोषव्यवस्था क्रियते । अनन्तरं पुस्तकानां विक्रयेण प्राप्तस्य द्रव्यस्यार्धांशस्य च कोषे समावेश: करिष्यते । प्रतिपुस्तकं पुस्तकमूल्यस्य चतुर्थोऽंश: पाठ्यपुस्तकस्य रचयित्रे परिव्ययत्वेन दास्यते । पुस्तकमूल्यस्य अन्यश् चतुर्थोऽशश्च पाठ्यपुस्तकप्रचारार्थं विनियोक्ष्यते । एवं क्रमेण प्रथमकक्षाप्रभृति दशमकक्षापर्यन्तं पञ्चमकक्षापर्यन्तमेव वा दश पञ्च वा पाठ्यपुस्तकानि प्रकाशयिष्यन्ते । एतदर्थम् अवरतो द्वे लक्षे (२,००,०००।-) रूप्यकाणाम् आवश्यके । तत्र एतस्य कोषस्य व्यवस्थां कर्तुमधोनिर्दिष्टं दानं दत्तवद्भ्यो महानुभावेभ्य: स्वाद्ध्यायशालाकुटुम्बेन धन्यवादा उपदियन्ते ।

| | | | | | |
|---|---|---|---|---|---|
| १ | श्रीप्रीतिनाथप्याकुर्याल: ठमेलनिवासी | २०००।- | १६ | श्रीराधाकृष्ण अधिकारी काभ्रि-गोर्जेनिवासी | ५०५।- |
| २. | श्रीयुत: अर्जुनवहादुरसिंह: वालुआटारनिवासी | २०००।- | १७ | श्रीजगन्नाथप्याकुर्याल: नक्सालनिवासी | ५०२।- |
| ३ | श्रीप्रसादशम्सेरथापा: गैरिधारा जोरपाटीनिवासी | २०००।- | १८ | श्रीकेशवर्माण: आ. दीक्षित: गैरिधारानिवासी | ५०१।- |
| ४ | शालिग्रामगौतमभ्राता श्रीटेकनाथगौतम: दाडनिवासी | १५००।- | १९. | श्रीसुन्दरप्रसादशाह: ज्ञानेश्वरनिवासी | ५०१।- |
| ५. | श्रीयुता हरिमायादेवी पौड्यालया तनुडमैवलनिवासिनी | ११००।- | २०. | श्रीकृष्णकान्त: अधिकारी लैनचौरनिवासी | ५०१।- |
| ६ | श्रीभुवनदेवानन्द रामशाहपथनिवासी | ११००।- | २१ | श्रीदीपकप्रसादढुङ्गेल: वालुआटारनिवासी | ५०१।- |
| ७ | श्रीयुता गङ्गामायादेवी(पद्मा)आचार्यानी तनुडचुदिनिवासिनी | १०००।- | २२. | श्रीरामबाबुपन्त: ज्ञानेश्वरनिवासी | ५०१।- |
| ८. | शालिग्रामसुतश्रीशङ्करप्रसादगौतम: दाडनिवासी | १०००।- | २३ | श्रीहरिप्रसादपौडेल: ललितपुरनिवासी | ५०१।- |
| ९. | श्रीयुता गणराजोपाध्यायखनालपत्नी त्रिपुरेश्वरनिवासिनी | १०००।- | २४ | श्रीश्रीरामपौडेल: ललितपुरनिवासी | ५०१।- |
| १०. | श्रीमधुसूदनढकाल: चण्डोलनिवासी | १०००।- | २५. | श्रीसोमनाथोपाध्यायघिमिरे: टङ्गालनिवासी | ५००।- |
| ११. | क्याप्टेन-श्रीरामकाजि-गुरुङ: स्याङ्जा-पाभकटेरिनिवासी | १०००।- | २६ | श्रीगोपीनाथढवाडी ज्ञानेश्वरनिवासी | ५००।- |
| १२ | श्रीहेमराजज्ञवाली महाङकालचौद्धनिवासी | १०००।- | २७ | श्रीराधारमण उपाध्याय आचार्य: ज्ञानेश्वरनिवासी | ५००।- |
| १३ | श्रीदुर्गाप्रसाददवाडी काभ्रि-कोटमनिनिवासी | ५११।- | २८. | श्रीसोमनाथपौडेल: सामाखुसिनिवासी | ५००।- |
| १४ | श्रीरमेशखकुरेल: कमलपोखरिनिवासी | ५११।- | २९. | श्रीहरिप्रसादपौडेल: चण्डोलनिवासी | ५००।- |
| १५ | श्रीयुता टीकामञ्जरी प्याकुर्यालया मण्डिखाटारनिवासिनी | ५०५।- | ३० | वसिसपुतलिनिवासिश्रीगोवर्धनवहादुरकार्किद्वारा दाना | १००००।- |
| | | | ३१. | अन्ये उदारा महानुभावा: | ८३९.३।- |

## ४. संस्कृतस्य शुद्धम् उच्चारणम् , संस्कृतभाषा च

इदानीं संस्कृतज्ञनिकाये आ, ई, ऊ, ऋ, ॠ, ऌ, ॡ, ए, ओ इत्येतेषां स्वरवर्णानाम् , अं,अ: इत्येतयोरयोगवाहवर्णयो: , न, व, श, ष इत्येतेषां योगवाहव्यञ्जनवर्णानाम् उच्चारणे श्रुतौ च अबोधो भ्रमश्च व्यापको वर्तते । पण्डिता अपि प्रायेण उक्तानां वर्णानां शुद्धम् उच्चारणं न जानन्ति । अत उपर्युक्तानां वर्णानाम् उच्चारणे अशुद्धिं कुर्वाणा: संस्कृतपाठका: सर्वत्र दृश्यन्ते , तथा च ज्ञ इत्यस्य ज्य इति क्ष इत्यस्य छ्यइति ज्ञ इत्यस्य ग्यँ दन न्य इत्यादिकम् अशुद्धम् उच्चारणं च प्रचलितं दृश्यते । एतादृशमुच्चारणं शास्त्रसम्मतं नाऽस्ति । अत एतेषां शुद्धं शास्त्रसम्मतमुच्चारणं कर्तुं प्रयत्न: कर्तव्य: । लकारऋकार-

योगजाक्षरलिपेः ऌ इत्यतः स्वतन्त्रस्वररूपस्य ऌकारस्य लिपेर् भेदस्याऽप्रसिद्धत्वाच् च स्वररूपऌकारस्वरूपविषये अपि पण्डिताः प्रायेण भ्रान्ताः प्राप्यन्ते । संस्कृतस्य शिक्षकेभ्य उच्चारण-विषयेऽपि प्रशिक्षणव्यवस्था कर्तव्या । आकाशवाणीद्वाराऽपि शुद्धमुच्चारणं प्रचारणीयम् । एतस्मिन् विषये संस्कृतशिक्षाप्रेमिभिरवधानन् देयम् ।

संस्कृतभाषायां सन्धिः स्वाभाविकरूपेणागच्छति । सन्धिं (सन्धिजविकारं वा) त्यक्त्वा पृथक्पृथक् पदानि सह रक्षित्वा वाक्यं निर्माय क्रियमाणं शिक्षणं संस्कृतभाषाया जीवतः प्रवाहस्य प्रतिकूलं वर्तते । तथापि सरलीकरणं व्यपदिश्य इदानीन्तन-सस्कृत-पाठ्यपुस्तक-लेखनादौ तेनैव प्रकारेण वाक्यप्रदर्शनस्य परिपाटी स्वीकृता दृश्यते । एतस्य प्रचलनस्य निरुत्साहनम् उचितं वर्तते । तथापि व्यवहारे सहसा परिवर्तन कर्तुमशक्यं विलोक्य अस्माभिरपि एतस्मिन् प्रथमे पुस्तके तस्याः परिपाट्याः किञ्चिदनुसरण कृतमस्ति । भाषायाः सरलीकरणं खलु प्रसिद्धतराणां पदानां चयनेन जटिलानां वाक्यरचनानां यथासम्भवं परिहारेण च कार्यम् , न तु जीवतो भाषाप्रवाहस्य प्रतिकूलतया अस्वाभाविक्या भाषाया प्रयोगेणेति पण्डितैर् विवेक्तव्यम् । एतस्मिन् विषये संस्कृतभाषावित्सु , संस्कृतशिक्षाप्रेमिषु , शिक्षावित्सु , शिक्षकेषु , विद्यार्थिषु चोचितायां चेतनायां जागरितायां पूर्णतया स्वाभाविकस्यैव संस्कृतस्य एतादृशे पाठ्यपुस्तके प्रयोगोऽस्माभिः कर्तुमिष्यते ।

"अग्निम् प्रणम, इक्षुङ् खाद" इत्यादिषु पदान्तस्थ-पञ्चमवर्णस्य स्थाने अनुस्वारस्यैव लेखनम् , उच्चारणे तु उभयत्राऽपि मकारस्यैवोच्चारणम् इदानीन्तनैः प्रायः सर्वैरपि संस्कृतपाठकैः क्रियते । इयं रीतिः संस्कृत-भाषायाः उच्चारणगतशुद्धेर् दृष्ट्या आपत्तिजनिका वर्तते । व्यञ्जने परे सति पदान्तमकारस्य अनुस्वारीभवनं यद्यपि पाणिनीयव्याकरणसम्मतम् , तथापि अनुस्वारस्य उच्चारणे प्रायः अशुद्धेः क्रियमाणत्वात् र-श-ष-स-ह-वर्णातिरिक्तेषु सर्वेष्वपि व्यञ्जनवर्णेषु परेषु अनुस्वारस्य परसवर्णीभावस्य मूलाया वैदिक-संस्कृतभाषाया अनुकूलतरत्वात् परसवर्णीभावपक्षस्यावलम्बनम् उचितम् आवश्यकं च वर्तते । अग्निम् प्रणम, इक्षुङ् खाद, उक्षाणवँ विलोकय, ऋक्षन् नैव छुप, ऌकारलँ लिख, एडकाँश् चारय इत्येतादृशेन रूपेण प्रयोगं कृत्वा लेखने उच्चारणे च साम्ये स्थापिते भाषाया लिखितः प्रयोगः सरलश्च भवति । उच्चारणप्रतिकूलस्य लेखनस्य शिक्षणे महत् काठिन्य भवतीति सर्वैः शिक्षकैरनुभूतमेवाऽस्ति । तस्माद् वयम् एतस्य पक्षस्य प्रचाराय प्रयतमानाः स्मः । तथापि प्रचलनस्य प्राचुर्याद् इदानीं सर्वेषु व्यञ्जनेषु परेषु पदान्तमकारस्य अनुस्वारीकरणपक्ष एव लेखे-ऽङ्गीकृतः । तथापि परसवर्णपक्षेण सह परिचयार्थं कतिपयेषु पाठेषु परसवर्णोदाहरणानि दत्तानि सन्ति । शिक्षकै-रेतां वस्तुस्थितिं बुद्ध्वा अनुस्वारस्य परसवर्णत्रर्णाना च उच्चारणगते भेदे विद्यार्थिनां ध्यानाकर्षणं कर्तव्यम् ।

विसर्गस्योच्चारणेऽपि अशुद्धिकरणं व्यापकरूपेण प्राप्यते । विसर्गस्योच्चारणगतस्वरूपमपि बहुभिरज्ञात-मेवास्तीति ज्ञायते । विसर्गस्य खलु कखयोः परयोः जिह्वामूलीयरूपेण पफयोः परयोरुपध्मानीयरूपेण शषसेषु परेषु परसवर्णरूपेणोच्चारणं स्वाभाविकतरं भवति । तस्मात् स्वाभाविक्यां व्यावहारिक्या संस्कृतभाषायाम् एतस्यैव पक्षस्य अवलम्बनं समुचितं दृश्यते । तथाप्येतस्मिन् पक्षे उचितायाश्चेतनाया जागरणं यावन्न भवति तावत् प्रचलिता पद्धतिरेवाऽस्मिन् पुस्तकेऽप्यङ्गीक्रियते । एतद्विषयेऽपि उक्तं स्वाभाविक पक्षमेव प्रचलने आनेतुं प्रयासः करिष्यते ।

सस्कृतभाषायां व्यञ्जने परे सति स्वरात् परं व्यञ्जनं द्विरुच्यते । एतादृशं व्यञ्जनद्वित्वं स्वाभाविकं वर्तते । द्विर्भूतयोर् व्यञ्जनयोर् मध्ये प्रथमं व्यञ्जन पूर्वाक्षरस्याऽङ्गं भवति द्वितीयञ्च परस्याऽक्षरस्याऽङ्गं भवति । यथा "आदित्त्यम्" इत्यत्र "आ-दित्-त्यम्" इति त्रीण्यक्षराणि, "पश्श्य" इत्यत्र "पश्-श्य" इति द्वे अक्षरे । यद्यपि "अनचि च (८।४।४७)" इति सूत्रेणाऽप्यन्वाख्यातो व्यञ्जनद्वित्वस्याऽयं पक्षः प्राय आधुनिके लेखेऽनुसृतो न दृश्यते, तथापि वेदेषु प्राचीनेषु केषु चन शिलाभिलेखेषु च लेखनेऽप्ययं पक्षोऽवलम्बितो दृश्यते, उच्चारणे तु प्रायो निरपवादतयाऽधुनाऽप्युपलभ्यते । तस्मादुच्चारणानुसारमेव लेखनं शिक्षार्थिभ्यो बालकेभ्यः सरलं भवतीति व्यञ्जनद्वित्वयुक्तं लेखनमेव स्वाभाविकतरं सरलं युक्तियुक्तञ्च भवति । तथाप्येतस्मिन् विषयेऽपि एतस्मिन् पुस्तकेऽधुना प्रचलिता व्यञ्जनद्वित्वाकरणरीतिरेवाङ्गीकृता, काठिन्यभ्रमादिपरिहारार्थम् । बालकवितायां नीतिश्लोकेषु च व्यञ्जनद्वित्वं प्रयुक्तमस्ति, यतोच्चारणे द्वित्वोच्चारणस्य स्वाभाविकतरत्वात् । एतस्मिन् विषयेऽपि जागरणे जाते तु उच्चारणानुकूलमेव लेखनं प्रचारयितुं वयं प्रयतिष्यामहे ।

उपर्युक्तेषु विषयेषु विशेषज्ञान वाञ्छद्भिः तद्विषये चिन्तनं मनन कर्तुमिच्छद्भिर् जनैः स्वाध्यायशाला-कुटुम्बेन प्रकाशितायाः कौण्डिन्न्यायनशिक्षाया अध्ययनं कृत्वा सम्बद्धविषयाणां मननं कर्तुमुचितमस्ति ।

उपर्युक्तेषु विषयेषु प्रबोधे विवेके च सुकरता कर्तुं सारण्या अपि ते विषयाः प्रस्तूयन्ते —

# सारणी

| विषया: | इदानीं प्रचलित: पक्ष: | | स्वाभाविकतर: शुद्धतरश्च पक्ष: |
|---|---|---|---|
| | लेखे | उच्चारणे | लेखोच्चारणयो: |
| १. सन्धि: | | | |
| (क) स्वरसन्धि: | माता अस्ति | माता अस्ति | मातास्ति |
| | इति अभणीत् | इति अभणित् | इत्यभणीत् |
| (ख) व्यञ्जनसन्धि: | | | |
| जश्त्वम् | चित्रकात् बिभेति | चित्रकाद् बिभेति | चित्रकाद् बिभेति |
| नकारविकार: | एडकान् चारय | एडकान् चारय | एडकांश् चारय |
| मकारविकारे | | | |
| अनुस्वारपरसवर्णीभाव: | मनुष्य: कार्यं कुरुते | मनुस्यह् कार्यम् कुरुते | मनुष्यᳵ कार्यङ् कुरुते |
| | कृषक: खाटीं खनति | क्रिसकह् खाटिम् खनति | कृषको खाटीङ् खनति |
| | चक्राभ्यां चलति | चक्काब्भ्याम् चलति | चक्काभ्याञ् चलति |
| | मस्तकं क्षुपति | मस्तकम् क्षुपति | मस्तकञ् क्षुपति |
| | त्वं जलं पिबसि | त्वम् जलम् पिबसि | त्वञ् जलम् पिबसि |
| | त्वं ढक्कां नादय | त्वम् ढक्काम् नादय | त्वण् ढक्कान् नादय |
| | गोपाल: गां ताडयति | गोपालह् गाम् ताडयति | गोपालो गान् ताडयति |
| | पत्रं पठ | पत्रम् पठ | पत्रम् पठ |
| | विद्यालयं याहि | विद्यालयम् याहि | विद्यालयय्ँ याहि |
| | लगुडं लाहि | लगुडम् लाहि | लगुडल्ँ लाहि |
| | घटिकां विलोकय | घटिकाम् विलोकय | घटिकाव्ँ विलोकय |
| नित्यानुस्वारभाव: | बालकं शायय | बालकम् सायय | बालकं शायय |
| | कालं षट्पदं पश्य | कालम् स(ख)ट्पदम् पस्स्य | कालं षट्पदम् पश्श्य |
| | छत्रं समादत्स्व | छत्रम् समादत्स्व | छत्रं समादत्स्व |
| | यूयं हिण्डध्वे | युयम् हिण्डद्ध्वे | यूयं हिण्डद्ध्वे |
| विसर्गविकारे | | | |
| विसर्गस्य | | | |
| जिह्वामूलीयभाव: | बालक: किं कुरुते | बालकह् किम् कुरुते | बालकᳵ किङ् कुरुते |
| | बालक: खेलति | बालकह् खेलति | बालकᳵ खेलति |
| उपध्मानीयभाव: | बालक: पठति | बालकह् पठति | बालकᳶ पठति |
| | बालक: फलं खादति | बालकह् फलम् खादति | बालकᳶ फलङ् खादति |
| सकारभाव: | शकट: चक्राभ्यां चलति | सकटह् चक्कब्भ्याम् चलति | शकटश् चक्राभ्याञ् चलति |
| | शिक्षक: छात्रान् पाठयति | सिच्छ्यकह् छात्त्रान् पाठयति | शिक्ष्षकश् छात्त्रान् पाठयति |
| | कृषक: तत्र पाशमतिष्ठिपत् | क्रिसंकह् तत्र पासमतिष्ठिपत् | कृषकस् तत्र पाशमतिष्ठिपत् |
| परसवर्णीभाव: | बालक: शेते | बालकह् सेते | बालकश् शेते |
| | बालक: षट्पदं पश्यति | बालकह् स(ख)ट्पदम् पस्स्यति | बालकष् षट्पदम् पश्श्यति |
| | बालक: सन्तुष्यति | बालकह् सन्तुस्स्यति | बालकस् सन्तुष्ष्यति |
| ओकारभाव: | कुक्कुर: बुक्कति | कुक्कुरह् बुक्कति | कुक्कुरो बुक्कति |
| | घोटक: अपि धावति | घोटकह् अपि धावति | घोटकोऽपि धावति |
| रेफभाव: | अग्नि: ज्वलति | अग्निह् ज्वलति | अग्निर् ज्वलति |
| २. व्यञ्जनद्वित्वम् | वाक्यम् | वाक्क्यम् | वाक्क्यम् |
| | इक्षुं खाद | इच्छ्छुम् खाद | इक्क्षुङ् खाद |
| | उच्यते | उच्च्यते | उच्च्यते |
| | यज्ञियमण्डपं विलोकय | ज्यग्गींयमण्डपम् विलोकय | यज्ज्ञियमण्डपव्ँ विलोकय |
| | पठ्यते | पट्ठ्यते | पट्ठ्यते |
| | कथ्यते | कत्थ्यते | कत्थ्यते |
| | प्राप्यते | प्राप्प्यते | प्राप्प्यते |
| | पश्यति | पस्स्यति | पश्श्यति |
| | मनुष्य: | मनुस्स्यह् | मनुष्ष्य: |
| | बालकस्य | बालकस्स्य | बालकस्स्य |

संस्कृतस्य शास्त्रीयेषु ग्रन्थेषु उच्चकोटिक-साहित्यिक-ग्रन्थेषु च प्रयुक्तानां प्रातिपदिकानां धातूनाञ्चा-ऽपेक्षया नैपालीयाद्याधुनिक-भाषाणां निकटवर्तिनां संस्कृतभाषाया: प्रातिपदिकानां धातूनाञ्च प्रयोग: नैपालीय-भाषादिभाषिणां बालकानां कृते सरलो भवतीति आरम्भिककक्षापुस्तकेषु तादृशानामेव प्रातिपदिकानां धातूनाञ्च मुख्यतया प्रयोगस्य सरणिं गृहीत्वा एतत् पुस्तकं लिखितं वर्तते ।

एतत् , इदम् , अदस् , तत् इत्येतेषां प्रातिपदिकानां प्रयोगे "इदम: प्रत्यक्षगत समीपतरवर्ति चैतदो रूपम् । अदसस् तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥" इत्यादिका वस्तुस्थितिर् निरन्तरं स्मृता वर्तते ।

अन्यै: संस्कृतपाठ्यपुस्तकलेखकै: सरलीकरणं व्यपदिश्य भूतार्थे अद्यतनेऽपि लङ्लकारस्य प्रयोग: क्रियते । किन्तु तादृश: प्रयोग: संस्कृतभाषाया: पाणिनीय-व्याकरणान्वाख्यातस्य स्वभावस्य प्रतिकूलोऽस्ति । तस्मादस्माभि: संस्कृतभाषाया: पाणिनीय-व्याकरणान्वाख्यात-स्वभावमनुसृत्याऽत्र सामान्ये भूते लुङ्लकारस्य प्रयोग: कृतो वर्तते । भूतविशेषे यथायथं लङो लिटो वा प्रयोग: उत्तरकक्षापुस्तकेषु करिष्यते ।

अत्र प्रातिपदिकविभक्त्यव्ययादीनां प्रयोगे भाषागत-स्वाभाविकताया अनुसरणं सावधानतया कृत वर्तते । अभ्यासवर्धनाय पूर्वस्मिन् पाठे पठितानां पदानां वाक्यानां चोत्तरपाठेऽपि यथौचिति प्रयोग: कृतोऽस्ति ।

पुल्लिङ्गकेषु प्रातिपदिकेषु अस्मिन् पाठ्यपुस्तके अकारान्त-प्रातिपदिकस्यैव प्रचुरतया समावेश: कर्तव्य इति नैपालीय-भाषाभाषिबालकानां कृते शिक्षणे सुगमान्यपि हली इत्यादिकानि प्रातिपदिकरूपाणि त्यक्त्वा हालिक इत्यादीनि प्रातिपदिकरूपाणि प्रयुक्तानि सन्ति । हिण्डते छुपति इत्यादिका: प्रयोगा इदानीमुपलभ्यमाने संस्कृत-वाङ्मये अप्रचलिता:, तथापि नैपालीयाद्याधुनिक-भाषाणां निकटे स्थिता: पाणिनीय-धातुपाठ-सम्मताश् चेति हेतो-रत्र परिगृहीता: । एवमेव अमरकोशादिप्रचलितकोषेषु अनुपलभ्यमानान्यपि झवकादिप्रातिपदिकान्यपि प्रयुक्तानि ।

बालानां कृते सुबोधानां दैनन्दिने व्यवहारे आगन्तृणाम् अपि पदार्थानां वाचकानि कानि चन पदानि तु संस्कृतभाषाया इदानीं दैनन्दिन-लौकिकव्यवहाराद् अपसृतत्वात् शिक्षकाणामपि कृते दुर्बोधानि स्युरिति तेषां सपर्यायाणाम् उल्लेखोऽत्र क्रियते- उक्षा=वृषभ:, ऋक्ष:=भल्लूक:, एडक:=मेष:, अंशुकम्=वस्त्रम्, झवक:=बिडाल:, झर:=निर्झर:, टङ्क:=पाषाणदारण:, पलितम्=कर्म, त्रपुषम्=कर्कटी, बुक्कति=भषति, वाश्यते=शब्दं कुरुते, फुल्लति=विकसति (पुष्प्यति), हिण्डते=चलति, फुल्लानि= पुष्पाणि, बर्कर:=अज:, कुद्दाल:=खननसाधन-विशेष:, गेन्दुक:=कन्दुक:, कलमम्=लेखनी, नक्रम्=नासिका, खटिका=कालपट्टे लेखने प्रयोज्या कठिनी, कलकल:= अस्पष्ट: अव्यवस्थितश्च उच्च: शब्द: ।

अत्र परिशिष्टे सौराणां मासानां चान्द्राणां मासानां च नामानि पृथक्पृथक् दत्तानि सन्ति । अमरकोशा-द्युल्लेखाद् एतद्विषये सर्वे व्यामूढा: सन्ति । बहुभिर् जनैर् वेदाङ्गज्योतिषस्थस्य "स्वराक्रमेते सोमार्कौ यदा साकं सवासवौ । स्यात् तदादियुगं माघस् तप: शुक्लोऽयनं ह्युदक् ॥" इत्यस्य श्लोकस्य व्याख्याने माघशब्दस्य तपश्शब्दस्य च समानार्थकत्वम् उक्तं दृश्यते । किन्त्वत्र माघशब्दस्य तपश्शब्दस्य च एकस्मिन् वाक्ये समुच्चयेन प्रयोग: कृतोऽस्ति । अत एतयो: शब्दयो: पृथगर्थत्वं स्पष्टं भवति । न हि समानार्थकस्य शब्दस्य समुच्चयेन एकस्मिन् मौलिके वाक्ये प्रयोग: सम्भवति । "मधुश्च माधवश्च वासन्तिकावृतू" इत्यादिकाया: श्रुते (मा. स १३।२५, तै.सं. ४।४।११।१) दर्शनाच्च मधुमाधवादीनां शब्दानां सौरमासावबोधकत्व ज्ञायते । "मातृवर्गचरणस्पृशौ मुनेस्तौ प्रपद्य पदवीं महौजस: । रेजतुर् गतिवशात् प्रवर्तिनौ भास्करस्य मधुमाधवाविव ॥" इत्येतस्मात् कालिदासीयात् पद्याच्च (रघु. ११।७) तत् स्फुटतर बोद्धुं शक्यते । "साऽस्मिन् पौर्णमासीति" इति पाणिनीयस्य सूत्रस्य दर्शनात् (अष्टा. ४।२।२१) व्यवहारतश्च चैत्रवैशाखादिशब्दानां चान्द्र-मासावबोधकत्वं स्फुटं ज्ञातुं शक्यम् । इदानीं प्रचलित: सौरवैशाख इत्यादिको व्यवहारस्तु लाक्षणिको बोध्य: ।

## ५. पठन-पाठन-प्रक्रिया

अत्र गणेशस्तोत्रं सरस्वतीस्तोत्रं च अवश्यपठनीयत्वेन सङ्गृहीतं नास्ति । तथापि शिक्षकै: अभिभावकैश्च मुखेनैव श्रावयित्वा बालकै: कण्ठस्थीकरणं कारयितुम् अपि शक्यते । अथवा उभयोरपि स्तोत्रयोरेकैकमेव पद्यं पाठनीयं पठनीयं वा ।

१. पाठनायैकं स्वस्य विद्यालस्य वा पुस्तकं शिक्षकेण स्वहस्ते एव धारणीयम् , २. अत्र दत्तानां पाठानां विभागं कृत्वा एकस्मै दिनाय एक: उपपाठ: कल्पनीय:, ३. एकस्मिन् दिने सामान्यतया पञ्चषाणि वाक्यानि पाठनीयानि, ४. तत्र कक्षायां सर्वप्रथम शिक्षकेण तस्य दिवसस्य पाठो धीरेण गम्भीरेण स्वरेण विलम्बितया वृत्त्या स्फुटतया सर्वश्राव्यतया त्रिवारं श्रावणीय:, ५. तत: अर्थश्च बोधयितव्य:, ६. अर्थ: प्रयोगेणैव बोधयितव्य:, अत्यन्तावश्यकत्वे एव अनुवाद आश्रयणीय:, ७. ततो विद्यार्थिभिरपि एकैकश: कृत्वा उच्चारण कारयितव्यम्

८. उच्चारणे विद्यार्थिभिः प्रत्येक कृता दोषाः संशोध्याः, ९. ततः शिक्षकेण एकस्मिन् वाक्ये उच्चारिते तदनुसारमेव सर्वैर् विद्यार्थिभिस् तद् वाक्यम् उच्चारणीयम् , एवं बहुवारं कर्तव्यम् , १०. ततो विद्यार्थिभि-रर्थोऽवबुद्ध उत न इति परीक्षा कर्तव्या, ११. यदि एकेन विद्यार्थिना अर्थो नाऽवबुद्धो दृश्यते तदा तस्मै वाक्यार्थो बोधयितव्यः, यदि सर्वैरेवार्थो नाऽवबुद्धो दृश्यते तदा सर्वेभ्य एव वाक्यार्थो बोधयितव्यः, १२. पुस्तके दत्तान् प्रश्नान् शिक्षकेण पृष्ट्वा विद्यार्थिभ्य उत्तराणि ग्रहीतव्यानि, १३. शिक्षकेण यथासम्भवं क्रिया-सम्पादनादेशादिना व्यवहारद्वाराऽपि विद्यार्थिनां संस्कृतभाषाबोधः कारयितव्यः; तदर्थम् उपविश, उत्तिष्ठ, जालम् उद्घाटय, द्वारं पिधेहि, पाठम् पठ, कालपट्टं पश्य, चित्रं लिख, स्वनाम लिख, अभ्यन्तर् आगच्छ, बहिर् गच्छ, अर्थम् अज्ञासीः? अर्थं भण इत्यादिवाक्यानां प्रयोगः कर्तव्यः।

विद्यार्थिनां सुदीर्घपरम्परागतासु रागात्मकगेयतायुतासु पद्यबद्धरचनासु अत्यन्तगभीरभाववत्सु सुभाषितेषु चाऽभिरुचिं जागरितां कर्तुमत्र स्वल्पानि काव्यपद्यानि नीतिपद्यानि च दत्तानि सन्ति । बाल्यावस्थातः प्रभृत्येव बालकाः एतादृशानां पद्यानां लयबद्धतया पठनस्याऽभ्यासं कुर्युस्तर्हि ते स्वपरम्परातः अपगता न स्युरिति एतानि पद्यानि अत्र सङ्गृहीतानि सन्ति । कक्षायाम् एतेषां पद्यानां श्रावणं शिक्षकेण भूयोभूयः कार्यम् । एतेषां पद्यानां कण्ठस्थीकरणे विद्यार्थिनः प्रोत्साहनीयाः । अन्यदीयेषु एतेषु पद्येषु क्व चिद् आवश्यकं परिवर्तनमपि कृतमस्ति । एतेषु पद्येषु भाषिक-दृष्ट्या कक्षानुरूपताया अभावोऽपि अस्माभिः सोढव्य एव । अत्र अर्थावबोधनमपि गौण-मेवेदानीम् ।

अस्मिन् पुस्तके परिशिष्टे षण्णां प्रातिपदिकानां सर्वासु विभक्तिषु सर्वेषु वचनेषु च रूपाणि दत्तानि सन्ति । तथा च दशानां धातूनां त्रयाणां लकाराणां सर्वेषु पुरुषेषु सर्वेषु वचनेषु च रूपाणि दत्तानि सन्ति । एतानि रूपाणि प्रातिपदिक-धातु-रूपाणीत्थमागच्छन्ति इति बोधाय दत्तानि सन्ति, न अनिवार्यतया कण्ठस्थीकरणाय । कानि चन वैदिकानि रूपाण्यपि तत्रतत्र कोष्ठकेषु सूक्ष्मैरक्षरैर् दत्तानि सन्ति । तेषां यथारुचि अभ्यासः कर्तव्यः कारयितव्यश्च । दत्त-प्रातिपदिकरूपावली-धातुरूपावल्योरभ्यासे कृते तयोरुपयोगं कृत्वा पाठ्यपुस्तकप्रदर्शितमार्गेण अन्या अपि वाक्यरचनाः कर्तुं कारयितुं च शक्यन्ते ।

परिशिष्टेषु येऽन्ये विषयाः समाविष्टाः सन्ति ते गणना-गुणनसारणी-वार-तिथि-पक्ष-मास-ऽर्तु-वर्ष-युग-नक्षत्र-राशिसदृशेषु अत्यावश्यकेषु संस्कृतमूलकेषु विषयेषु विद्यार्थिनां ज्ञानं पुष्कलं भवत्विति हेतोरत्र समाविष्टाः सन्ति । ते विषयाः प्रथमकक्षायामनिवार्यतया शिक्षणीया न सन्ति । यः अभिभावकः विद्यालयो वा इच्छति स एतस्य भागस्यापि पाठनं कर्तुं शक्नोति । एतेषां विषयाणाम् अपि स्वेच्छया कण्ठस्थीकरणं क्रियते तर्हि तद् अत्यन्तम् उपयोगि भवेत् ।

आत्मनः बालकान् गम्भीररूपेण संस्कृते प्रवृत्तान् कर्तुं ये वाञ्छन्ति ते समीपस्थे विद्यालये संस्कृत-पाठनस्य स्वाभीष्ट-रूपायां व्यवस्थायामसत्यामपि स्वगृहे एव एतां व्यावहारिक-संस्कृत-पाठ्यपुस्तकमालां प्रारम्भतः क्रमेण पाठयित्वा स्वोद्देश्यं प्राप्तुं शक्नुवन्तु इति विचार्य तदनुकूलतां विधातुम् अत्र गणेशस्तोत्रादिकं सर्वं समाविष्टमस्ति, वर्णमाला-सम्बद्धा सामग्री च दत्ता वर्तते, परिशिष्टञ्च योजितमस्ति । विद्यालया अपि एतान् विषयान् स्वेच्छया परिग्रहीतुं शक्नुवन्ति ।

एषोऽस्माकं संस्कृत-शिक्षणरीतेः स्वगृहाद् बहिः प्रयोगस्य प्रथमः प्रयासो वर्तते । अतोऽत्र अनुभवस्य न्यूनतया बहवो दोषा भवेयुः । तन्निराकरणाय संस्कृतशिक्षाविदां शिक्षकाणामभिभावकानां च सहयोगः प्रार्थ्यते ।

## ६. साधुवादार्पणम्

एतस्य पुस्तकस्य रचनायां सर्वविधानि निर्देशनानि दत्त्वा एतत् पुस्तकं एतादृशरूपेण निष्पन्नं कर्तुं पथप्रदर्शनं कृतवतां सुगृहीतनाम-पूजनीय-तातपादानामाचार्यशिवराजकौण्डिन्न्यायनानां सान्निध्यमेतस्य पुस्तकस्य प्रकाशने सर्वदा सर्वथा प्रेरकं सफलतामूलं चास्तीति विज्ञापयामि ।

एतस्य पुस्तकस्य मुद्रणार्थं सुसङ्गमनयोजनमुद्रणकार्यस्य सुसम्पादने विशिष्टं नियामकत्वं कृत्वा एतस्य पुस्तकस्य एतादृशरूपेण प्रकाशने महत् कार्यं कृतवतः श्रीमतः अग्रजान् आमोदवर्धन-कौण्डिन्न्यायनमहोदयान् प्रति कृतज्ञतां व्यक्तीकरोमि । प्रमुद्रणसंशोधनकार्ये सूक्ष्मदृष्ट्या विलोक्य त्रुटिनिराकरणं कर्तुं सहयोगं कृतवतः प्रियंवदाम्बाकौण्डिन्न्यायनी-सुमोदवर्धनकौण्डिन्न्यायन-सम्मोदवर्धनकौण्डिन्न्यायन-वशंवदाम्बाकौण्डिन्न्यायन्य-तिसम्मोदवर्धन-कौण्डिन्न्यायनान् प्रति साधुवादान् व्याहरामि । वशंवदाम्बा चित्राण्यपि अलेखीदिति तस्यै विशेषतःसाधुवादान् ददामि । पुस्तके समावेशनीयानां कतिपयचित्राणां न्यूनतमेन पारिश्रमिकेण लेखनं कृत्वा अविस्मरणीयं सहयोगं कृतवते श्रीसुरेन्द्रराजभट्टराइमहाभागाय च साधुवादान् ददामि ।

प्रमोदवर्धनः कौण्डिन्न्यायनः
स्वाध्यायशालाकुटुम्बगृह्यः

# सङ्कष्टनाशनं श्रीगणेशस्तोत्रम्

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् ।
भक्तावासं स्मरेन् नित्यमायुःकामार्थसिद्धये ॥ १ ॥
प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् ।
तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥ २ ॥
लम्बोदरं पञ्चमं च षष्ठं विकटमेव च ।
सप्तमं विघ्नराजं च धूम्रवर्णं तथाऽष्टमम् ॥ ३ ॥
नवमं भालचन्द्रं च दशमं तु विनायकम् ।
एकादशं गणपतिं द्वादशं तु गजाननम् ॥ ४ ॥
द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन् नरः ।
न च विघ्नभयं तस्य सर्वसिद्धिकरं परम् ॥ ५ ॥
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
पुत्रार्थी लभते पुत्रान् मोक्षार्थी लभते गतिम् ॥ ६ ॥
जपेद् गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् ।
संवत्सरेण सिद्धिं च लभते नाऽत्र संशयः ॥ ७ ॥
अष्टानां ब्राह्मणानां च लिखित्वा यः समर्पयेत् ।
तस्य विद्या भवेत् सर्वा गणेशस्य प्रसादतः ॥ ८ ॥

• इति श्रीनारदपुराणे सङ्कष्टनाशनं गणेशस्तोत्रम् •

## श्रीसरस्वतीस्तोत्रम्

सरस्वती मया दृष्टा वीणापुस्तकधारिणी ।
हंसवाहनसंयुक्ता विद्यादानं करोतु मे ॥ १ ॥
प्रथमं भारती नाम द्वितीयं च सरस्वती ।
तृतीयं शारदा देवी चतुर्थं हंसवाहिनी ॥ २ ॥
पञ्चमं तु जगन्माता षष्ठं वागीश्वरी तथा ।
सप्तमं चैव कौमारी चाऽष्टमं वरदायिनी ॥ ३ ॥
नवमं बुद्धिदात्री च दशमं ब्रह्मचारिणी
एकादशं चन्द्रघण्टा द्वादशं भुवनेश्वरी ॥ ४ ॥
द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः ।
जिह्वाग्रे वसते तस्य ब्रह्मरूपा सरस्वती ॥ ५ ॥

### मा निषादेत्यादिको वाल्मीकीयः श्लोकः

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

## प्रथमः पाठः

### वर्णमालावाक्यानि

**अ**ग्निं प्रणम ।

**आ**दित्यं पश्य ।

**इ**क्षुं खाद ।

**ई**क्षणं कुरुष्व ।

**उ**क्षाणं विलोकय।

**ऊ**र्णां क्रीणीष्व।

**ऋ**क्षं नैव छुप।

**ॠ**कारं पठ।

ऌकारम् उच्चारय।

ॡकारं लिख।

एडकान् चारय।

ऐरावतं वर्णय।

ओदनं खाद।

औषधं पिब।

अंशुकं परिधत्स्व।

अः इति लिख।

**क**मलानि गणय।

**ख**ट्वायां शेष्व।

**ग**णितं कुरुष्व।

**घ**टिकां विलोकय।

**ङा**वकं पश्य।

चत्वरे खेल।

छत्रं समादत्स्व।

जलं पिब।

झरे स्नाहि।

ञकारं पठ।

टङ्कम् आनय।

ठक्कुरं पश्य।

डमरुं वादय।

ढक्कां नादय।

णकारं परिचिनु।

**त**डागं पश्य।

**थ**लितं कुरुष्व।

**द**धि खाद।

**ध**नुः समादत्स्व।

**न**खान् निकृन्त।

**प**त्रं पठ।

**फ**लानि खाद।

**ब**दराणि अवचिनु।

**भ**क्तं खाद।

**म**धु लिक्ष्व।

**य**ष्टिम् आनय।

**र**थं विलोकय।

**ल**गुडं लाहि।

**व**ने विचर।

**श**कटं पश्य।

**ष**ट्पदं विलोकय।

**स**खायं विह्वयस्व।

**ह**रिणं पश्य।

**य**ज्ञियमण्डपं विलोकय ।

**क्ष**त्त्रियं परिचिनु ।

**ज्ञा**निनम् उपास्व ।

**त्र**पुषं खाद ।

## द्वितीयः पाठः

## वर्णमाला

### अथ स्वराः

अ आ इ ई उ ऊ

ऋ ॠ ऌ ॡ (इति समानाक्षराणि)

ए ऐ ओ औ (इति सन्ध्यक्षराणि) इति स्वराः

### अथ व्यञ्जनानि

अं अः (इति अयोगवाहौ)

(अथ योगवाहाः)

क-खौ ग-घौ ङः

च-छौ ज-झौ ञः

ट-ठौ ड-ढौ णः

त-थौ द-धौ नः

प-फौ ब-भौ मः (इति स्पर्शाः)

य - र - ल - वाः (इति अन्तस्थाः)

श - ष - स - हाः (इति ऊष्माणः) इति व्यञ्जनानि

ष - क्ष - ज्ञ - त्राः (इति लिपिविशेषाः)।

## तृतीयः पाठः

### (व्यञ्जनस्वरयोगसारणी)

क का कि की कु कू कृ कॄ कॢ कॣ के कै को कौ कं कः

ख खा खि खी खु खू खृ खॄ खॢ खॣ खे खै खो खौ खं खः

ग गा गि गी गु गू गृ गॄ गॢ गॣ गे गै गो गौ गं गः

घ घा घि घी घु घू घृ घॄ घॢ घॣ घे घै घो घौ घं घः

ङ ङा ङि ङी ङु ङू ङृ ङॄ ङॢ ङॣ ङे ङै ङो ङौ ङं ङः

च चा चि ची चु चू चृ चॄ चॢ चॣ चे चै चो चौ चं चः

छ छा छि छी छु छू छृ छॄ छॢ छॣ छे छै छो छौ छं छः

ज जा जि जी जु जू जृ जॄ जॢ जॣ जे जै जो जौ जं जः

झ झा झि झी झु झू झृ झॄ झॢ झॣ झे झै झो झौ झं झः

ञ ञा ञि ञी ञु ञू ञृ ञॄ ञॢ ञॣ ञे ञै ञो ञौ ञं ञः

ट टा टि टी टु टू टृ टॄ टॢ टॣ टे टै टो टौ टं टः

ठ ठा ठि ठी ठु ठू ठृ ठॄ ठॢ ठॣ ठे ठै ठो ठौ ठं ठः

ड डा डि डी डु डू डृ डॄ डॢ डॣ डे डै डो डौ डं डः

ढ ढा ढि ढी ढु ढू ढृ ढॄ ढॢ ढॣ ढे ढै ढो ढौ ढं ढः

ण णा णि णी णु णू णृ णॄ णॢ णॣ णे णै णो णौ णं णः

त ता ति ती तु तू तृ तॄ तॢ तॣ ते तै तो तौ तं तः

थ था थि थी थु थू थृ थॄ थॢ थॣ थे थै थो थौ थं थः

द दा दि दी दु दू दृ दॄ दॢ दॣ दे दै दो दौ दं दः

ध धा धि धी धु धू धृ धॄ धॢ धॣ धे धै धो धौ धं धः

न ना नि नी नु नू नृ नॄ नॢ नॣ ने नै नो नौ नं नः

प पा पि पी पु पू पृ पॄ पॢ पॣ पे पै पो पौ पं पः

फ फा फि फी फु फू फृ फॄ फॢ फॣ फे फै फो फौ फं फः

ब बा बि बी बु बू बृ बॄ बॢ बॣ बे बै बो बौ बं बः

भ भा भि भी भु भू भृ भॄ भॢ भॣ भे भै भो भौ भं भः

म मा मि मी मु मू मृ मॄ मॢ मॣ मे मै मो मौ मं मः

य या यि यी यु यू यृ यॄ यॢ यॣ ये यै यो यौ यं यः

र रा रि री रु रू रृ रॄ रॢ रॣ रे रै रो रौ रं रः

ल ला लि ली लु लू लृ लॄ लॢ लॣ ले लै लो लौ लं लः

व वा वि वी वु वू वृ वॄ वॢ वॣ वे वै वो वौ वं वः

श शा शि शी शु शू शृ शॄ शॢ शॣ शे शै शो शौ शं शः

ष षा षि षी षु षू षृ षॄ षॢ षॣ षे षै षो षौ षं षः

स सा सि सी सु सू सृ सॄ सॢ सॣ से सै सो सौ सं सः

ह हा हि ही हु हू हृ हॄ हॢ हॣ हे है हो हौ हं हः

## चतुर्थः पाठः

### (प्रथमायाः विभक्तेः एकवचनस्य प्रयोगः)

बालकः शेते ।

अनुजः खेलति ।

घोटकः धावति ।

कुक्कुरः बुक्कति ।

चटकः उड्डयते ।

कुक्कुटः वाश्यते ।

बालिका हसति ।

फलं पतति ।

फुल्लं फुल्लति ।

ऋषभः हिण्डते ।

त्वं हिण्डसे ।

अहं हिण्डे ।

## अभ्यासः

१. बालकः किं कुरुते ? बालकः शेते ।
२. अनुजः किं कुरुते ? अनुजः खेलति ।
३. घोटकः किं कुरुते ? घोटकः धावति ।
४. कुक्कुरः किं कुरुते ? कुक्कुरः बुक्कति ।
५. चटकः किं कुरुते ? चटकः उड्डयते ।
६. कुक्कुटः किं कुरुते ? कुक्कुटः वाश्यते ।
७. बालिका किं कुरुते ? बालिका हसति ।
८. फलं किं कुरुते ? फलं पतति ।
९. फुल्लं किं कुरुते ? फुल्लं फुल्लति ।
१०. ऋषभः किं कुरुते ? ऋषभः हिण्डते ।
११. अहं किं कुर्वे ? त्वं हिण्डसे ।
१२. त्वं किं कुरुषे ? अहं हिण्डे ।

## पञ्चमः पाठः

### (प्रथमायाः विभक्तेः द्विवचनस्य प्रयोगः)

बालकौ शयाते ।

अनुजौ खेलतः ।

घोटकौ धावतः ।

कुक्कुरौ बुक्कतः ।

चटकौ उड्डयेते ।

कुक्कुटौ वाश्येते ।

बालिके हसतः ।

फले पततः ।

फुल्ले फुल्लतः।

ऋषभौ हिण्डेते ।

युवां हिण्डेथे ।

आवां हिण्डावहे ।

अभ्यासः

१. बालकौ किं कुर्वाते ? बालकौ शयाते ।
२. अनुजौ किं कुर्वाते ? अनुजौ खेलतः ।
३. घोटकौ किं कुर्वाते ? घोटकौ धावतः ।
४. कुक्कुरौ किं कुर्वाते ? कुक्कुरौ बुक्कतः ।
५. चटकौ किं कुर्वाते ? चटकौ उड्डयेते ।
६. कुक्कुटौ किं कुर्वाते ? कुक्कुटौ वाश्येते ।
७. बालिके किं कुर्वाते ? बालिके हसतः ।
८. फले किं कुर्वाते ? फले पततः ।
९. फुल्ले किं कुर्वाते ? फुल्ले फुल्लतः ।
१०. ऋषभौ किं कुर्वाते ? ऋषभौ हिण्डेते ।
११. आवां किं कुर्वहे ? युवां हिण्डेथे ।
१२. युवां किं कुर्वाथे ? आवां हिण्डावहे ।

## सप्तमः पाठः

### (द्वितीयायाः विभक्तेः प्रयोगः)

छात्रः गणितं कुरुते ।

मनुष्यः कार्यं कुरुते ।

ऋषभौ हलं कर्षतः ।

ऋषभौ शकटं वहतः ।

वानरः फलं खादति ।

बालकः भक्तं खादति ।

माया दुग्धं पिबति ।

त्वं जलं पिबसि ।

बालिका विद्यालयं गच्छति।

रामः पाठं पठति ।

त्वं पाठं पठसि ।

अहं पाठं पठामि ।

अभ्यासः

१. छात्रः किं कुरुते ? छात्रः गणितं कुरुते ।
२. मनुष्यः किं कुरुते ? मनुष्यः कार्यं कुरुते ।
३. ऋषभौ किं कर्षतः ? ऋषभौ हलं कर्षतः ।
४. ऋषभौ किं वहतः ? ऋषभौ शकटं वहतः ।
५. वानरः किं खादति ? वानरः फलं खादति ।
६. बालकः किं खादति ? बालकः भक्तं खादति ।
७. माया किं पिबति ? माया दुग्धं पिबति ।
८. अहं किं पिबामि ? त्वं जलं पिबसि ।
९. बालिका कुत्र गच्छति ? बालिका विद्यालयं गच्छति ।
१०. रामः किं पठति ? रामः पाठं पठति ।
११. अहं किं पठामि ? त्वं पाठं पठसि ।
१२. त्वं किं पठसि ? अहं पाठं पठामि ।

## अष्टम: पाठ:

(तृतीयाया: विभक्ते: प्रयोग:)

कृषाण: कुद्दालेन वाटीं खनति।

हालिक: हलेन क्षेत्रं कृषति।

गोपाल: दण्डेन गां ताडयति।

बालक: हस्तेन मस्तकं छुपति।

शकटः चक्राभ्यां चलति ।

मनुष्या: पादाभ्यां हिंण्डन्ते ।

त्वं मया सह खेलसि ।

अहं त्वया सह खेलामि ।

## अभ्यास:

१. कृषाण: केन वाटीं खनति ? कृषाण: कुद्दालेन वाटीं खनति ।
२. हालिक: केन क्षेत्रं कृषति ? हालिक: हलेन क्षेत्रं कृषति ।
३. गोपाल: केन गां ताडयति ? गोपाल: दण्डेन गां ताडयति ।
४. बालक: केन मस्तकं छुपति ? बालक: हस्तेन मस्तकं छुपति ।
५ शकट: केन चलति ? शकट: चक्राभ्यां चलति ।
६. मनुष्या: केन हिण्डन्ते ? मनुष्या: पादाभ्यां हिण्डन्ते ।
७. अहं केन सह खेलामि ? त्वं मया सह खेलसि ।
८. त्वं केन सह खेलसि ? अहं त्वया सह खेलामि ।

# नवमः पाठः

(चतुर्थ्याः विभक्तेः प्रयोगः)

माता बालकाय भक्तं ददाति ।

माता बालकाय दुग्धं ददाति ।

पिता बालिकायै पुस्तिकां ददाति ।

पिता बालिकायै कलमं ददाति ।

हालिकः ऋषभाभ्यां पलालं ददाति ।

गौः वत्साय दुग्धं ददाति ।

अहं तुभ्यं पुस्तकं ददामि ।

त्वं मह्यं गेन्दुकं ददासि ।

अभ्यास:

१. माता कस्मै भक्तं ददाति ? माता बालकाय भक्तं ददाति ।
२. माता कस्मै दुग्धं ददाति ? माता बालकाय दुग्धं ददाति ।
३. पिता कस्मै पुस्तिकां ददाति ? पिता बालिकायै पुस्तिकां ददाति ।
४. पिता कस्मै कलमं ददाति ? पिता बालिकायै कलमं ददाति ।
५. हालिक: कस्मै पलालं ददाति ? हालिक: ऋषभाभ्यां पलालं ददाति ।
६. गौ: कस्मै दुग्धं ददाति ? गौ: वत्साय दुग्धं ददाति ।
७. त्वं कस्मै पुस्तकं ददासि ? अहं तुभ्यं पुस्तकं ददामि ।
८. अहं कस्मै गेन्दुकं ददामि ? त्वं मह्यं गेन्दुकं ददासि ।

## दशमः पाठः

(पञ्चम्याः विभक्तेः प्रयोगः)

मनुष्यः वनात् दारुकाणि आनयति।

अम्बा कूपात् जलम् आनयति।

गृहं मनुष्यं वर्षात् रक्षति।

गृहं मनुष्यं घर्मात् रक्षति ।

आकाशात् पानीयं पतति ।

वृक्षात् फलं पतति ।

बिडाल: कुक्कुरात् बिभेति।

कुक्कुर: चित्रकात् बिभेति ।

## अभ्यास:

१. मनुष्य: कुत: दारुकाणि आनयति ? मनुष्य: वनात् दारुकाणि आनयति ।
२. अम्बा कुत: जलम् आनयति ? अम्बा कूपात् जलम् आनयति ।
३. गृहं मनुष्यं कस्मात् रक्षति ? गृहं मनुष्यं वर्षात् रक्षति ।
४. गृहं मनुष्यं अन्यस्मात् कस्मात् रक्षति ? गृहं मनुष्यं घर्मात् रक्षति ।
५. कस्मात् पानीयं पतति ? आकाशात् पानीयं पतति ।
६. कस्मात् फलं पतति ? वृक्षात् फलं पतति ।
७. बिडाल: कस्मात् बिभेति ? बिडाल: कुक्कुरात् बिभेति ।
८. कुक्कुर: कस्मात् बिभेति ? कुक्कुर: चित्रकात् बिभेति ।

## एकादश: पाठ:

(षष्ठ्या: विभक्ते: प्रयोग:)

बालकस्य पुस्तकम् अस्ति ।

बालकस्य पुस्तिका अस्ति ।

बालकस्य कलमम् अस्ति ।

बालकस्य गृहम् अस्ति ।

बालिकाया: पिता अस्ति ।

बालिकाया: माता अस्ति ।

तव हस्तौ स्त: ।

तव पादौ स्त: ।

मम मस्तकम् अस्ति ।

मम मुखम् अस्ति ।

मम नक्रम् अस्ति ।

मम नेत्रे स्तः।

## अभ्यासः

१. कस्य पुस्तकम् अस्ति ? बालकस्य पुस्तकम् अस्ति ।
२. कस्य पुस्तिका अस्ति ? बालकस्य पुस्तिका अस्ति ।
३. कस्य कलमम् अस्ति ? बालकस्य कलमम् अस्ति ।
४. कस्य गृहम् अस्ति ? बालकस्य गृहम् अस्ति ।
५. कस्य पिता अस्ति ? बालिकायाः पिता अस्ति ।
६. कस्य माता अस्ति ? बालिकायाः माता अस्ति ।
७. कस्य हस्तौ स्तः ? तव हस्तौ स्तः ।
८. कस्य पादौ स्तः ? तव पादौ स्तः ।
९. कस्य मस्तकम् अस्ति ? मम मस्तकम् अस्ति ।
१०. कस्य मुखम् अस्ति ? मम मुखम् अस्ति ।
११. कस्य नक्रम् अस्ति ? मम नक्रम् अस्ति ।
१२. कस्य नेत्रे स्तः ? मम नेत्रे स्तः ।

## द्वादश: पाठ:

(सप्तम्या: विभक्ते: प्रयोग:)

मनुष्या: गृहे निवसन्ति ।

वानरा: वृक्षे निवसन्ति ।

शिक्षका: मञ्चेषु उपविशन्ति ।

बालका: विद्यालये पठन्ति ।

वने व्याघ्र: भवति ।

वने शृगाल: भवति ।

मनुष्या: तडागे स्नान्ति ।

अम्बा महानसे भक्तं पचति ।

बालकः स्थाले भक्तं खादति ।

महिषी क्षेत्रे हिण्डते ।

ऋषभौ क्षेत्रे हिण्डेते ।

वर्कराः क्षेत्रे हिण्डन्ते ।

त्वं क्षेत्रे हिण्डसे ।

युवां क्षेत्रे हिण्डेथे ।

यूयं क्षेत्रे हिण्डध्वे ।

अहं वाटे हिण्डे ।

आवां वाटे हिण्डावहे।

वयं वाटे हिण्डामहे।

अभ्यासः

१. मनुष्याः कुत्र निवसन्ति ? मनुष्याः गृहे निवसन्ति।
२. वानराः कुत्र निवसन्ति ? वानराः वृक्षे निवसन्ति।
३. शिक्षकाः कुत्र उपविशन्ति ? शिक्षकाः मञ्चेषु उपविशन्ति।
४. बालकाः कुत्र पठन्ति ? बालकाः विद्यालये पठन्ति।
५. कुत्र व्याघ्रः भवति ? वने व्याघ्रः भवति।
६. कुत्र शृगालः भवति ? वने शृगालः भवति।
७. मनुष्याः कुत्र स्नान्ति ? मनुष्याः तडागे स्नान्ति।
८. अम्बा कुत्र भक्तं पचति ? अम्बा महानसे भक्तं पचति।
९. बालकः कस्मिन् भाण्डे भक्तं खादति ? बालकः स्थाले भक्तं खादति।
१०. महिषी कुत्र हिण्डते ? महिषी क्षेत्रे हिण्डते।
११. ऋषभौ कुत्र हिण्डेते ? ऋषभौ क्षेत्रे हिण्डेते।
१२. वर्कराः कुत्र हिण्डन्ते ? वर्कराः क्षेत्रे हिण्डन्ते।
१३. अहं कुत्र हिण्डे ? त्वं क्षेत्रे हिण्डसे।
१४. आवां कुत्र हिण्डावहे ? युवां क्षेत्रे हिण्डेथे।
१५. वयं कुत्र हिण्डामहे ? यूयं क्षेत्रे हिण्डध्वे।
१६. त्वं कुत्र हिण्डसे ? अहं वाटे हिण्डे।
१७. युवां कुत्र हिण्डेथे ? आवां वाटे हिण्डावहे।
१८. यूयं कुत्र हिण्डध्वे ? वयं वाटे हिण्डामहे।

## त्रयोदशः पाठः

(सम्बोधनविभक्तेः प्रयोगः)

बालक, इतः आगच्छ ।

बालक, द्वारम् उद्घाटय ।

बालक, बहिर् गच्छ ।

बालक, अभ्यन्तर् आगच्छ ।

बालक, द्वारं पिधेहि ।

बालक, स्वस्थानं गच्छ।

बालकौ, कलहं न कुर्वाथाम् ।

बालकाः, कलकलं न कुरुध्वम् ।

बालिके, इतः आगच्छ ।

बालिके, पुस्तकं खट्विकायां रक्ष ।

बालिके, मञ्चे उपविश ।

बालिके, पाठं पठ ।

बालक, सत्यं वद ।

बालक, धर्मं चर ।

बालक, मातृदेवो भव ।

बालक, पितृदेवो भव ।

बालक, आचार्यदेवो भव ।

बालक, अतिथिदेवो भव ।

अभ्यासः

छात्रान् एतं पाठं पाठयित्वा यथासम्भवम् एतदनुसारं क्रियाकलापः कारयितव्यः ।

## चतुर्दशः पाठः

(एतद्-इदम्-अदस्-प्रातिपदिकानां प्रयोगः)

एषः बालकः चञ्चलः अस्ति।

एतौ द्वौ बालकौ चञ्चलौ स्तः।

एते त्रयः बालकाः चञ्चलाः सन्ति।

एषा बालिका चतुरा अस्ति।

एते द्वे बालिके चतुरे स्तः।

एताः तिस्रः बालिकाः चतुराः सन्ति।

एतत् फलम् मधुरम् अस्ति।

एते द्वे फले मधुरे स्तः।

एतानि त्रीणि फलानि मधुराणि सन्ति। अयं बालक: विद्यालयं गच्छति।

इमौ द्वौ ऋषभौ गोष्ठे तिष्ठत:। इमे त्रय: घोटका: चत्वरे चरन्ति।

इयं बालिका विद्यालयं गच्छति।

इमे द्वे पेटिके रिक्ते स्त:।

इमा: तिस्र: माला: शोभना: सन्ति।

इदं चत्वरं समम् अस्ति।

इमे द्वे गृहे सदृशे स्तः ।

इमे द्वे गृहे सदृशे न स्तः ।

इमानि भाण्डानि सुन्दराणि सन्ति।

असौ चन्द्रः धूसरः अस्ति ।

असौ बालकः विद्यालयं गच्छन् अस्ति।

अमू ऋषभौ क्षेत्रे चरतः।

अमी बालकाः चत्वरे खेलन्ति ।

असौ नदी गभीरा अस्ति ।

असौ तारका उज्ज्वला अस्ति ।

अमू तारके उज्ज्वले स्तः ।

अमूः तारकाः सप्तर्षयः सन्ति।

अदः हिमालयशिखरं सर्वोच्चं वर्तते।

अमू हिमालयशिखरे विश्वप्रसिद्धे स्तः।

अमूनि गृहाणि सुन्दराणि सन्ति ।

अभ्यासः

शिक्षकेण एतत्, इदम्, अदस् इत्येतेषां प्रातिपदिकानाम् अर्थः परस्परं भेदश्च प्रयोगेणैव बोधयितव्यः ।

## पञ्चदश: पाठ:

## (सङ्ख्याविशेषणानि)

एक: बालक:
पठति।

एका बालिका
लिखति।

एकं फलं
पतति।

द्वौ बालकौ
पठत:।

द्वे बालिके
लिखत:।

द्वे फले
पतत:।

त्रय: बालका:
पठन्ति।

तिस्र: बालिका:
लिखन्ति।

त्रीणि फलानि
पतन्ति।

चत्वारः बालकाः
पठन्ति ।

चतस्रः बालिकाः
लिखन्ति ।

चत्वारि फलानि
पतन्ति ।

पञ्च बालकाः
पठन्ति ।

पञ्च बालिकाः
लिखन्ति ।

पञ्च फलानि
पतन्ति ।

षट् बालकाः
पठन्ति ।

षट् बालिकाः
लिखन्ति ।

षट् फलानि
पतन्ति ।

सप्त बालकाः पठन्ति ।

सप्त बालिकाः लिखन्ति ।

सप्त फलानि पतन्ति ।

अष्ट बालकाः पठन्ति ।

अष्ट बालिकाः लिखन्ति ।

अष्ट फलानि पतन्ति ।

नव बालकाः पठन्ति ।

नव बालिकाः लिखन्ति ।

नव फलानि पतन्ति ।

दश बालकाः
पठन्ति ।

दश बालिकाः
लिखन्ति ।

दश फलानि
पतन्ति ।

## अभ्यासः

चित्रं प्रदर्श्य कति बालकाः पठन्ति ? (उ.— एकः बालकः पठति द्वौ बालकौ पठतः, त्रयः बालकाः पठन्ति, चत्वारः बालकाः पठन्ति, ...) कति बालिकाः लिखन्ति ? कति फलानि पतन्ति ? इत्यादिरूपेण प्रश्नाः प्रष्टव्याः, छात्रेभ्यः समुचितमुत्तरं च प्राप्तव्यम् ।

षोडशः पाठः

# बालकविता

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणन् त्वमेव
त्वमेव सर्वम् मम देवदेव ॥१॥

द्रुमास् सपुष्पास् सलिलं सपद्मम्
भूमिस् सदूर्वा पवनस् सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्च रम्म्यास्
सर्वं सखे चारुतरवँ वसन्ते ॥२॥

पानीयभारङ् गुरुकवँ वहन्तो
वर्षासु ते वारिधरा नदन्तः ।
उच्चेषु कूटेषु च पर्वतानावँ
विश्रम्म्यविश्रम्म्य पुनः प्रयान्ति ॥३॥

जलम् प्रसन्नङ् कुसुमञ्च फुल्लन्
दिशोऽमलाश् शालिशिखा विनम्म्राः ।
मन्दश्च वातो विमलश्च चन्द्रश्
शंसन्ति प्राप्तां शरदं सुरम्म्याम् ॥४॥

सप्तदशः पाठः

# विद्यालयः

विद्यायाः आलयः विद्यालयः इति कथ्यते । आलयशब्दः गृहं बोधयति । विद्यालयः ग्रामे अपि भवति । विद्यालयः नगरे अपि भवति । विद्यालये शिक्षकाः भवन्ति । विद्यालये शिक्षिकाः च भवन्ति । विद्यालये प्रधानाध्यापकः अपि भवति । बालकाः विद्यालयं गच्छन्ति । बालिकाः अपि विद्यालयं गच्छन्ति । ते तत्र पठन्ति । शिक्षकः छात्रान् पाठयति । स कालपट्टे खटिकया लिखति । छात्राः पुस्तिकायां कलमेन लिखन्ति । अपराह्णे सर्वे बालकाः बालिकाः च गृहं गच्छन्ति ।

विद्यालयस्य अग्रे चत्वरम् अपि भवति । मध्यान्तरे तत्र बालकाः खेलन्ति । बालिकाः अपि तत्र खेलन्ति ।

विद्यालये सर्वे बालकाः बालिकाः च मिलित्वा पठन्ति शिक्षकाः छात्रेषु स्नेहं कुर्वन्ति । छात्राः शिक्षकान् मानयन्ति ।

परीक्षायां प्रथमाय छात्राय प्रधानाध्यापकः पारितोषिकं ददाति सुशीलेभ्यः अन्येभ्यः छात्रेभ्यः च सः पारितोषिकं ददाति ।

विद्यालये पठित्वा मनुष्याः ज्ञानं प्राप्नुवन्ति । तेषु के चन ज्ञानेन महापुरुषाः अपि भवन्ति ॥

## अभ्यासः

समीचीनानि वाक्यानि अभ्यासपुस्तिकायां सारयत—

१. आलयशब्दः चत्वरं बोधयति ।
२. विद्यालयः नगरे एव भवति ।
३. बालकाः विद्यालयं न गच्छन्ति ।
४. बालकाः विद्यालये पठन्ति ।
५. बालिकाः विद्यालयं गच्छन्ति ।
६. बालिकाः विद्यालये नैव पठन्ति ।
७. बालकाः चत्वरे न खेलन्ति ।
८. बालिकाः चत्वरे खेलन्ति ।
९. शिक्षकाः छात्रान् न पाठयन्ति ।
१०. छात्राः शिक्षकान् मानयन्ति ।
११. शिक्षिकाः कालपट्टे खटिकया लिखन्ति ।

अष्टादश: पाठ:

# मृग-काक-शृगालानां कथा

एकस्मिन् वने एकस्य वृक्षस्य मूले एक: मृग: निवसति स्म । तस्य वृक्षस्य शाखायाम् एक: काक: अपि निवसति स्म । तौ च मित्रे अभूताम् । मृग: च हृष्ट: पुष्ट: च अभूत् । एकस्मिन् दिने एक: शृगाल: वने तं तादृशं हृष्टं पुष्टं मृगम् अद्राक्षीत् । तत: च स: शृगाल: विचारम् अकृत — अहो कियत् लोभनीयम् एतस्य मृगस्य मांसम् ! कथम् एतद् मांसं खादानि ? भवतु उपायेन एतस्य मारणे प्रयत्नं कुर्वे इति ।

तत: स: शृगाल: मृगस्य समीपे गत्वा अभणीत् — मृग, अहं तव मित्रं भवामि इति । मृग: अपि भवति इति अभणीत् । तत: सायङ्काले तौ द्वौ अपि तस्य वृक्षस्य मूले आगमताम् । तत: वृक्षे स्थित:

काकः शृगालम् अद्राक्षीत् । ततः स मृगम् अभणीत्– मित्र मृग, अयं कः अस्ति ? इति । मृगः अभणीत्– अयम् एकः शृगालः अस्ति । अयम् तव मित्रं भवामि इति भणति इति । ततः काकः अभणीत्– अपरिचितेन सह सहसा संवासः उचितः न भवति, तस्मात् त्वम् एतेन शृगालेन सह संवासं नैव कुरुष्व इति । तथापि मृगः नैव अमानीत् । ततः काकः अपि एवम् अस्तु तर्हि इति अभणीत् ।

ततः एकस्मिन् दिने शृगालः मृगम् अभणीत्– मित्र, अस्य वनस्य समीपे एकं लोभनीयं धान्यक्षेत्रम् अस्ति । तत्र गत्वा त्वं धान्यं खाद इति । ततः शृगालस्य वचनात् मृगः दिनेदिने तत्र गच्छति स्म, धान्यं च खादति स्म । ततः मृगेण धान्यं खादितं दृष्ट्वा क्षेत्रपतिः कृषकः तत्र पाशम् अतिष्ठिपत् । ततः अन्यस्मिन् दिने मृगः पाशे अपप्तत् । ततः स शृगालः अपि तत्र आगमत् ,मृगं पाशे पतितं च अद्राक्षीत् । ततः स मनसा “अथ कृषकः एतं मारयति, ततः अहं मांसलिप्तानि स्थूलानि अस्थीनि प्राप्नोमि” इति अभणीत् । ततः स शृगालः तत्रैव निलीनो भूत्वा उपाविक्षत् ।

ततः सायङ्काले काकः मृगम् अन्विच्छन् तत्रैव आगमत् । तथा पाशे पतितं मृगं च अद्राक्षीत् । मृगः अपि काकम् अद्राक्षीत् । ततः मृगः "मित्र काक, अपरिचितेन सह संवासात् अहं कष्टे अपप्तम्" इति अभणीत् । ततः काकः "अहं श्वः उपायं कुर्वे, रात्रिं सुखेन शेष्व" इति अभणीत् ।

ततः प्रातःकाले काकः मृगम् अभणीत्– "त्वं मृतः इव भूत्वा अवतिष्ठस्व, यदा अहं शब्दं करोमि तदा त्वं झटिति उत्थाय पलायस्व" इति । ततः मृगः मृतः इव भूत्वा अवास्थित । ततः पश्चात् कृषकः तत्र आगमत् । सः च मृगं मृतं मत्वा पाशान् उन्मुच्य तान् सङ्ग्रहीतुम् अलगीत् । ततः काकः शब्दम् अकार्षीत् । शब्दं श्रुत्वा मृगः अपि झटिति उत्थाय महता वेगेन पलायिष्ट । ततः कृषकः पलायमानं तं

मृगं प्रति लगुडं प्राहृत । किन्तु सः लगुडः तत्रैव निलीय अवस्थिते शृगाले अपप्तत् । ततश्च सः शृगालः महतीं पीडाम् अनुभूय अमृत । एवं यः अन्यं प्रति दुर्भावनां करोति सः स्वयम् एव विपदं प्राप्नोति इति दैवगतिः सफला अभूत् । इति ॥

## अभ्यासः

समीचीनानि वाक्यानि अभ्यासपुस्तिकायां सारयत—

१. एकस्मिन् वने एकस्य वृक्षस्य मूले एकः काकः निवसति स्म ।
२. एकस्य वृक्षस्य शाखायाम् एकः मृगः अपि निवसति स्म ।
३. एकस्मिन् दिने एकः शृगालः एकं मृगम् अद्राक्षीत् ।
४. काकः अभणीत्–अपरिचितेन सह सहसा संवास उचितः न भवति इति ।
५. मृगेण धान्यं खादितं दृष्ट्वा शृगालः तत्र पाशम् अतिष्ठिपत् ।
६. एकस्मिन् दिने मृगः पाशे अपप्तत् ।
७. काकः पाशे पतितं मृगम् अद्राक्षीत् ।
६. काकः शब्दम् अकार्षीत्
९. मृगः झटिति उत्थाय नैव पलायिष्ट ।
१०. कृषकः पलायमानं शृगालं प्रति लगुडं प्राहृत ।
११. कृषकः पलायमानं मृगम् प्रति लगुडं प्राहृत ।
१२. लगुडः निलीय अवस्थिते शृगाले अपप्तत् ।
१३. शृगालः महतीम् पीडाम्  अनुभूय अमृत ।

ऊनविंशः पाठः

# नीतिपद्यानि

वरमेको गुणी पुत्त्रो न च मूर्खशतान्न्यपि ।
एकश् चन्द्रस् तमो हन्ति न च तारागणोऽपि च ॥१॥

उद्द्यमेन तु सिद्ध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्स्य सिंहस्स्य प्रविशन्ति मुखे मृगाः ॥२॥

स्वगृहे पूज्ज्यते मूर्खस् स्वग्ग्रामे पूज्ज्यते धनी ।
स्वदेशे पूज्ज्यते राजा विद्द्वान् सर्वत्त्र पूज्ज्यते ॥३॥

विद्द्या ददाति विनयवँ विनयाद् याति पात्त्रताम् ।
पात्त्रत्त्वाद् धनमाप्नोति धनाद् धर्मन् ततस् सुखम् ॥४॥

दिवा पश्श्यति नोलूकः काको नक्तन् न पश्श्यति ।
विद्द्याविहीनो मूढस् तु दिवानक्तन् न पश्श्यति ॥५॥

क्षणशः कणशश् चैव विद्द्यामर्थञ् च चिन्तयेत् ।
क्षणत्त्यागे कुतो विद्द्या कणत्त्यागे कुतो धनम् ॥६॥

# परिशिष्टम्

## १

## प्रातिपदिकरूपावलि:*

१. अस्मत्-प्रातिपदिकस्य रूपाणि–

| | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|
| प्रथमायाम् - | **अहम्** (अस्मि) | **आवाम्** (आवम्) | **वयम्** (वयाम्, अस्मे) |
| द्वितीयायाम् - | **माम् (मा)** | **आवाम् (नौ)** | **अस्मान् (न:)** (अस्मे) |
| तृतीयायाम्- | **मया** | **आवाभ्याम्** | **अस्माभि:** (अस्मे) |
| चतुर्थ्याम्- | **मह्यम् (मे)** | **आवाभ्याम् (नौ)** | **अस्मभ्यम् (न:)** (अस्मभ्य, अस्मे) |
| पञ्चम्याम्- | **मत्** | **आवाभ्याम्** | **अस्मत्** (आवत्, अस्मे) |
| षष्ठ्याम् - | **मम (मे)** | **आवयो: (नौ)** | **अस्माकम् (न:)** (अस्माक,अस्मे) |
| सप्तम्याम् - | **मयि** (मे) | **आवयो:** | **अस्मासु** (अस्मत्सु, अस्मे) । |

२. युष्मत्-प्रातिपदिकस्य रूपाणि–

| | | | |
|---|---|---|---|
| प्रथमायाम्- | **त्वम्** (तुवम्) (तुम्, असि) | **युवाम्** (युवम्) | **यूयम्** (युष्मे) |
| द्वितीयायाम्- | **त्वाम् (त्वा)** | **युवाम् (वाम्)** | **युष्मान् (व:)** (युष्मा:,युष्मे) |
| तृतीयायाम्- | **त्वया** (त्वा) | **युवाभ्याम्** (युवा) | **युष्माभि:** (युष्मा, त्वाभि:, युष्मे) |
| चतुर्थ्याम्- | **तुभ्यम् (ते)** (तुभ्य) | **युवाभ्याम् (वाम्)** | **युष्मभ्यम् (व:)** (युष्मभ्य, युष्मे) |
| पञ्चम्याम्- | **त्वत्** | **युवाभ्याम्** (युवभ्याम्) | **युष्मत्** (युवत्, युष्मे) |
| षष्ठ्याम्- | **तव (ते)** | **युवयो:(वाम्)**(युवो:) | **युष्माकम् (व:)**(युष्माक, युष्मे) |
| सप्तम्याम्- | **त्वयि** (त्वे,तोते, तोत:) | **युवयो:** | **युष्मासु** (युष्मत्सु, युष्मे) । |

---

* ( ) एतादृशकोष्ठान्तर्गतानि सूक्ष्मलिपौ मुद्द्रितानि रूपाणि वेदे एव प्रयुक्तानि सन्ति, एतेषां स्वेच्छया अभ्यासस्त्यागो वा कार्य: । ( ) एतादृशकोष्ठान्तर्गतानि स्थूललिपौ मुद्द्रितानि रूपाणि विशेषस्थले (अन्वादेशे) एव प्रयुज्यमानानि सन्ति, एतेषामभ्यास: कर्तुमुचित: ।

३ बालक-प्रातिपदिकस्य पुंलिङ्गस्य रूपाणि–

| | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|
| प्रथमायाम्- | **बालक:** (बालका) | **बालकौ** (बालका) | **बालका:** (बालकास.) |
| द्वितीयायाम्- | **बालकम्** | **बालकौ** (बालका) | **बालकान्** |
| तृतीयायाम्- | **बालकेन** (बालकेना,बालकया) | **बालकाभ्याम्** | **बालकै:** (बालकेभि:) |
| चतुर्थ्याम्- | **बालकाय** | **बालकाभ्याम्** | **बालकेभ्य:** |
| पञ्चम्याम्- | **बालकात्** | **बालकाभ्याम्** | **बालकेभ्य:** |
| षष्ठ्याम्- | **बालकस्य** (बालकस्या) | **बालकयो:** (बालको:) | **बालकानाम्** (बालकाम्) |
| सप्तम्याम्- | **बालके** (बालका) | **बालकयो:** (बालको:) | **बालकेषु** |
| सम्बोधने- | **बालक** (बालका) | **बालकौ** (बालका) | **बालका:** (बालकास:) । |

४. बालिका-प्रातिपदिकस्य स्त्रीलिङ्गस्य रूपाणि –

| | | | |
|---|---|---|---|
| प्रथमायाम्- | **बालिका** | **बालिके** | **बालिका:** (बालिकास:) |
| द्वितीयायाम्- | **बालिकाम्** | **बालिके** | **बालिका:** |
| तृतीयायाम्- | **बालिकया** | **बालिकाभ्याम्** | **बालिकाभि:** |
| चतुर्थ्याम्- | **बालिकायै** | **बालिकाभ्याम्** | **बालिकाभ्य:** |
| पञ्चम्याम्- | **बालिकाया:** | **बालिकाभ्याम्** | **बालिकाभ्य:** |
| षष्ठ्याम्- | **बालिकाया:** (बालिकायै) | **बालिकयो:** (बालिकाभ्याम्) | **बालिकानाम्** (बालिकाभ्य:) |
| सप्तम्याम्- | **बालिकायाम्** | **बालिकयो:** | **बालिकासु** |
| सम्बोधने- | **बालिके** | **बालिके** | **बालिका:** ([illegible]लिकास:) । |

५. फल-प्रातिपदिकस्य नपुंसकलिङ्गस्य रूपाणि–

| | | | |
|---|---|---|---|
| प्रथमायाम्- | **फलम्** ([illegible]) | **फले** | **फलानि** (फला) |
| द्वितीयायाम्- | **फलम्** (फलात) | **फले** | **फलानि** (फला) |
| तृतीयायाम्- | **फलेन** (फलया, फला) | **फलाभ्याम्** | **फलै:** (फलेभि:) |
| चतुर्थ्याम्- | **फलाय** | **फलाभ्याम्** | **फलेभ्य:** |
| पञ्चम्याम्- | **फलात्** | **फलाभ्याम्** | **फलेभ्य:** |
| षष्ठ्याम्- | **फलस्य** (फलस्या) | **फलयो:** (फलो) | **फलानाम्** (फलाम्) |
| सप्तम्याम्- | **फले** (फला) | **फलयो:** (फलो:) | **फलेषु** |
| सम्बोधने | **फल** ([illegible]) | **फले** | **फलानि** (फला) । |

६. किम्-प्रातिपदिकस्य रूपाणि–

| पुंलिङ्गे | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्रथमायाम्- | कः | कौ (का) | के |
| द्वितीयायाम्- | कम् | कौ (का) | कान् |
| तृतीयायाम्- | केन | काभ्याम् | कैः (केभि |
| चतुर्थ्याम्- | कस्मै | काभ्याम् | केभ्यः |
| पञ्चम्याम्- | कस्मात् | काभ्याम् | केभ्यः |
| षष्ठ्याम्- | कस्य (कयस्य) | कयोः | केषाम् |
| सप्तम्याम्- | कस्मिन् | कयोः | केषु |
| **स्त्रीलिङ्गे** | | | |
| प्रथमायाम्- | का | के | काः |
| द्वितीयायाम्- | काम् | के | काः |
| तृतीयायाम्- | कया | काभ्याम् | काभिः |
| चतुर्थ्याम्- | कस्यै | काभ्याम् | काभ्यः |
| पञ्चम्याम्- | कस्याः | काभ्याम् | काभ्यः |
| षष्ठ्याम्- | कस्याः (कस्यै) | कयोः (काभ्याम्) | कासाम् (काभ्य.) |
| सप्तम्याम्- | कस्याम् | कयोः | कासु |
| **नपुंसकलिङ्गे** | | | |
| प्रथमायाम्- | किम् | के | कानि (का) |
| द्वितीयायाम्- | किम् | के | कानि (का) |
| तृतीयायाम्- | केन | काभ्याम् | कैः (केभिः) |
| चतुर्थ्याम्- | कस्मै | काभ्याम् | केभ्यः |
| पञ्चम्याम्- | कस्मात् | काभ्याम् | केभ्यः |
| षष्ठ्याम्- | कस्य (कयस्य) | कयोः | केषाम् |
| सप्तम्याम्- | कस्मिन् | कयोः | केषु । |

## २

# धातुरूपावलि:

१."भू सत्तायाम्" इत्यस्य धातो: कर्तरि लकारे रूपाणि–

| | | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|---|
| लटि- | प्रथमपुरुषे- | **भवति** | **भवत:** | **भवन्ति** |
| | मध्यमपुरुषे- | **भवसि** | **भवथ:** | **भवथ** |
| | उत्तमपुरुषे- | **भवामि** | **भवाव:** | **भवाम:** (भवामसि) । |
| लुङि- | प्र.- | **अभूत्** | **अभूताम्** (अभूयाम्) | **अभूवन्** |
| | म.- | **अभू:** (अभुव:) | **अभूतम्** | **अभूत** (अभूतन) |
| | उ.- | **अभूवम्** (अभूम्) | **अभूव** | **अभूम** । |
| लोटि- | प्र.- | **भवतु** (भूतु) **भवतात्** | **भवताम्** (भूताम्) | **भवन्तु** |
| | म.- | **भव** (भवा) **भवतात्** | **भवतम्** (भूतम्) | **भवत** (भवता, भवतन, भवथन) |
| | उ.- | **भवानि** (भवा) | **भवाव** | **भवाम** । |

२."खादृ भक्षणे" इत्यस्य धातो: कर्तरि लकारे रूपाणि–

| | | | | |
|---|---|---|---|---|
| लटि- | प्र.- | **खादति** | **खादत:** | **खादन्ति** |
| | म.- | **खादसि** | **खादथ:** | **खादथ** |
| | उ.- | **खादामि** | **खादाव:** | **खादाम:** (खादामसि) । |
| लुङि- | प्र.- | **अखादीत्** | **अखादिष्टाम्** | **अखादिषु:** |
| | म.- | **अखादी:** | **अखादिष्टम्** | **अखादिष्ट** |
| | उ.- | **अखादिषम्** (अखादीम्) | **अखादिष्व** | **अखादिष्म** । |
| लोटि- | प्र.- | **खादतु, खादतात्** | **खादताम्** | **खादन्तु** |
| | म.- | **खाद** (खादा) **खादतात्** | **खादतम्** | **खादत** (खादता, खादतन, खादथन) |
| | उ.- | **खादानि** (खादा) | **खादाव** | **खादाम** । |

३."पा पाने" इत्यस्य धातोः कर्तरि लकारे रूपाणि–

| | | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|---|
| लटि- | प्रथमपुरुषे- | **पिबति** (पिपाति) | **पिबतः** | **पिबन्ति** |
| | मध्यमपुरुषे- | **पिबसि** | **पिबथः** (पाथः) | **पिबथ** (पाथ) |
| | उत्तमपुरुषे- | **पिबामि** | **पिबावः** | **पिबामः** (पिबामसि) । |
| लुङि- | प्र.- | **अपात्** | **अपाताम्** | **अपुः** |
| | म.- | **अपाः** | **अपातम्** | **अपात** |
| | उ.- | **अपाम्** | **अपाव** | **अपाम** । |
| लोटि- | प्र.- | **पिबतु** (पातु) **पिबतात्** | **पिबताम्** | **पिबन्तु** |
| | म.- | **पिब** (पिबा) **पिबतात्** (पाहि) | **पिबतम्** | **पिबत** (पिबता, पिबतन, पिबथन, पात) |
| | उ.- | **पिबानि** (पिबा) | **पिबाव** | **पिबाम** । |

४."पठ व्यक्तायां वाचि" इत्यस्य धातोः कर्तरि लकारे रूपाणि–

| | | | | |
|---|---|---|---|---|
| लटि- | प्र.- | **पठति** | **पठतः** | **पठन्ति** |
| | म.- | **पठसि** | **पठथः** | **पठथ** |
| | उ.- | **पठामि** | **पठावः** | **पठामः** (पठामसि) । |
| लुङि- | प्र.- | **अपाठीत्** | **अपाठिष्टाम्** | **अपाठिषुः** |
| | म.- | **अपाठीः** | **अपाठिष्टम्** | **अपाठिष्ट** |
| | उ.- | **अपाठिषम्** | **अपाठिष्व** | **अपाठिष्म** । |
| पक्षान्तरे- | प्र.- | **अपठीत्** | **अपठिष्टाम्** | **अपठिषुः** |
| | म.- | **अपठीः** | **अपठिष्टम्** | **अपठिष्ट** |
| | उ.- | **अपठिषम्** | **अपठिष्व** | **अपठिष्म** । |
| लोटि- | प्र.- | **पठतु, पठतात्** | **पठताम्** | **पठन्तु** |
| | म.- | **पठ** (पठा) **पठतात्** | **पठतम्** | **पठत** (पठता, पठतन, पठथन) |
| | उ.- | **पठानि** (पठा) | **पठाव** | **पठाम** । |

५ "गम्लृ गतौ" इत्यस्य धातोः कर्तरि लकारे रूपाणि–

| | | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|---|
| लटि- | प्रथमपुरुषे- | **गच्छति**(गमति,जगति) | **गच्छतः** | **गच्छन्ति** |
| | मध्यमपुरुषे- | **गच्छसि** | **गच्छथः** | **गच्छथ** |
| | उत्तमपुरुषे- | **गच्छामि** | **गच्छावः** | **गच्छामः**(गच्छामसि) |
| लुङि- | प्र.- | **अगमत्** (अगन्) | **अगमताम्** | **अगमन्** (अग्मन्) |
| | म.- | **अगमः** | **अगमतम्** | **अगमत** |
| | उ.- | **अगमम्** | **अगमाव** | **अगमाम**(अगन्म) । |
| लोटि- | प्र.- | **गच्छतु**(गन्तु) **गच्छतात्** | **गच्छताम्** | **गच्छन्तु** (गमन्तु) |
| | म.- | **गच्छ**(गहि) **गच्छतात्** | **गच्छतम्** (गन्तम्) | **गच्छत**(गन्त,गन्ता,गन्त |
| | उ.- | **गच्छानि**(गच्छा) | **गच्छाव** | **गच्छाम** । |

६."दृशिर् प्रेक्षणे" इत्यस्य धातोः कर्तरि लकारे रूपाणि–

| | | | | |
|---|---|---|---|---|
| लटि- | प्र.- | **पश्यति** | **पश्यतः** | **पश्यन्ति** |
| | म.- | **पश्यसि** | **पश्यथः** | **पश्यथ** |
| | उ.- | **पश्यामि** | **पश्यावः** | **पश्यामः**(पश्यामसि) |
| लुङि- | प्र.- | **अदर्शत्** (अदर्शत) | **अदर्शताम्** | **अदर्शन्** (अदृशन्, अ |
| | म.- | **अदर्शः** | **अदर्शतम्** | **अदर्शत** |
| | उ.- | **अदर्शम्** | **अदर्शाव** | **अदर्शाम**(अदर्श्म,अदृश |
| पक्षान्तरे- | प्र.- | **अद्राक्षीत्** (अद्राक्) | **अद्राष्टाम्** | **अद्राक्षुः** |
| | म.- | **अद्राक्षीः** | **अद्राष्टम्** | **अद्राष्ट** |
| | उ.- | **अद्राक्षम्** | **अद्राक्ष्व** | **अद्राक्ष्म** । |
| लोटि- | प्र.- | **पश्यतु** **पश्यतात्** | **पश्यताम्** | **पश्यन्तु** |
| | म.- | **पश्य**(पश्यस्व,पश्याहि)**पश्यतात्** | **पश्यतम्** | **पश्यत** |
| | उ.- | **पश्यानि** | **पश्याव** | **पश्याम** । |

७."हिडि गत्यनादरयोः" इति धातोः कर्तरि लकारे रूपाणि–

| | | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|---|
| लटि- | प्रथमपुरुषे- | **हिण्डते** | **हिण्डेते** | **हिण्डन्ते** |
| | मध्यमपुरुषे- | **हिण्डसे** | **हिण्डेथे** | **हिण्डध्वे** |
| | उत्तमपुरुषे- | **हिण्डे** | **हिण्डावहे** | **हिण्डामहे ।** |
| लुङि- | प्र.- | **अहिण्डिष्ट** | **अहिण्डिषाताम्** | **अहिण्डिषत** |
| | म.- | **अहिण्डिष्ठाः** | **अहिण्डिषाथाम्** | **अहिण्डिध्वम्** |
| | उ.- | **अहिण्डिषि** | **अहिण्डिष्वहि** | **अहिण्डिष्महि ।** |
| लोटि- | प्र.- | **हिण्डताम्** | **हिण्डेताम्** | **हिण्डन्ताम्** |
| | म.- | **हिण्डस्व** | **हिण्डेथाम्** | **हिण्डध्वम्** (हिण्डध्वात्) |
| | उ.- | **हिण्डै** | **हिण्डावहै** | **हिण्डामहै ।** |

८."शीङ् स्वप्ने" इत्यस्य धातोः कर्तरि लकारे रूपाणि–

| | | | | |
|---|---|---|---|---|
| लटि- | प्र.- | **शेते** (शयते, शये) | **शयाते** | **शेरते** (शेरे, शयन्ते) |
| | म.- | **शेषे** | **शयाथे** | **शेध्वे** (शयध्वे) |
| | उ.- | **शये** | **शेवहे** | **शेमहे ।** |
| लुङि- | प्र.- | **अशयिष्ट** | **अशयिषाताम्** | **अशयिषत** |
| | म.- | **अशयिष्ठाः** | **अशयिषाथाम्** | **अशयिढ्वम्, अशयिध्वम्** |
| | उ.- | **अशयिषि** | **अशयिष्वहि** | **अशयिष्महि ।** |
| लोटि- | प्र.- | **शेताम्** (शयाम्) | **शयाताम्** | **शेरताम्** |
| | म.- | **शेष्व** | **शयाथाम्** | **शेध्वम्** (शेध्वात्) |
| | उ.- | **शयै** | **शयावहै** | **शयामहै ।** |

९."(डु) कृञ् करणे" इत्यस्य धातोः कर्तरि लकारे आत्मनेपदे रूपाणि–

| | | *एकवचने* | *द्विवचने* | *बहुवचने* |
|---|---|---|---|---|
| लटि- | प्रथमपुरुषे- | **कुरुते** | **कुर्वाते** | **कुर्वते** |
| | मध्यमपुरुषे- | **कुरुषे** | **कुर्वाथे** | **कुरुध्वे** |
| | उत्तमपुरुषे- | **कुर्वे** | **कुर्वहे** | **कुर्महे** । |
| लुङि- | प्र.- | **अकृत** | **अकृषाताम्** | **अकृषत**(अकर्त) |
| | म.- | **अकृथाः** | **अकृषाथाम्** | **अकृढ्वम्** |
| | उ.- | **अकृषि**(अक्रि) | **अकृष्वहि** | **अकृष्महि** । |
| लोटि- | प्र.- | **कुरुताम्** | **कुर्वाताम्** | **कुर्वताम्** |
| | म.- | **कुरुष्व**(कृष्व) | **कुर्वाथाम्** | **कुरुध्वम्**(कुरुध्वात्, कृ |
| | उ.- | **करवै**(करवे) | **करवावहै** | **करवामहै** । |

"(डु) कृञ् करणे" इत्यस्य धातोः कर्तरि लकारे परस्मैपदे रूपाणि–

| | | | | |
|---|---|---|---|---|
| लटि- | प्र.- | **करोति** | **कुरुतः** | **कुर्वन्ति** |
| | म.- | **करोषि** | **कुरुथः** | **कुरुथ** |
| | उ.- | **करोमि**(कुर्मि) | **कुर्वः** | **कुर्मः**(कुर्मसि) । |
| लुङि- | प्र.- | **अकार्षीत्** (अकः) | **अकार्ष्टाम्** (अकाताम्) | **अकार्षुः**(अक्रन्) |
| | म.- | **अकार्षीः**(अकः) | **अकार्ष्टम्** (अकतम्) | **अकार्ष्ट**(अकृत) |
| | उ.- | **अकार्षम्** (अकरम्) | **अकार्ष्व**(अकर्व) | **अकार्ष्म**(अकर्म) । |
| लोटि- | प्र.- | **करोतु, कुरुतात्** | **कुरुताम्** | **कुर्वन्तु** |
| | म.- | **कुरु, कुरुतात्** | **कुरुतम्** | **कुरुत**(कुरुतात्, कुरुतन, कुरु |
| | उ.- | **करवाणि**(करवा) | **करवाव** | **करवाम** । |

१०."अस भुवि" इत्यस्य धातोः कर्तरि लकारे रूपाणि--

| | | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|---|
| लटि- | प्रथमपुरुषे- | **अस्ति** | **स्तः** | **सन्ति** |
| | मध्यमपुरुषे- | **असि** | **स्थः** | **स्थ** (स्था) |
| | उत्तमपुरुषे- | **अस्मि** | **स्वः** | **स्मः** (स्मसि) । |
| लुङि- | प्र.- | **अभूत्** | **अभूताम्** (अभूयाम्) | **अभूवन्** (अभुवन्) |
| | म.- | **अभूः** (अभुवः) | **अभूतम्** | **अभूत** (अभूतन) |
| | उ.- | **अभूवम्** (अभूम्) | **अभूव** | **अभूम** । |
| लोटि- | प्र.- | **अस्तु, स्तात्** | **स्ताम्** | **सन्तु** |
| | म.- | **एधि** (एहि) **स्तात्** | **स्तम्** | **स्त** (स्ता, स्तात् , स्तन, स्थन) |
| | उ.- | **असानि** | **असाव** | **असाम** । |

## ३

# सङ्ख्याशब्दा : अङ्काश्च

१ एकम्
२ द्वे
३ त्रीणि
४ चत्वारि
५ पञ्च
६ षट्
७ सप्त
८ अष्ट
९ नव
१० दश
११ एकादश
१२ द्वादश
१३ त्रयोदश
१४ चतुर्दश
१५ पञ्चदश
१६ षोडश
१७ सप्तदश
१८ अष्टादश
१९ ऊनविंशति :
२० विंशति :
२१ एकविंशति:
२२ द्वाविंशति :
२३ त्रयोविंशति :
२४ चतुर्विंशति :
२५ पञ्चविंशति :
२६ षड्विंशति :
२७ सप्तविंशति :
२८ अष्टाविंशति :
२९ ऊनत्रिंशत्
३० त्रिंशत्
३१ एकत्रिंशत्
३२ द्वात्रिंशत्
३३ त्रयस्त्रिंशत्
३४ चतुस्त्रिंशत्
३५ पञ्चत्रिंशत्
३६ षट्त्रिंशत्
३७ सप्तत्रिंशत्
३८ अष्टात्रिंशत्
३९ ऊनचत्वारिंशत्
४० चत्वारिंशत्
४१ एकचत्वारिंशत्
४२ द्वाचत्वारिंशत्
४३ त्रिचत्वारिंशत्
४४ चतुश्चत्वारिंशत्
४५ पञ्चचत्वारिंशत्
४६ षट्चत्वारिंशत्
४७ सप्तचत्वारिंशत्
४८ अष्टचत्वारिंशत्
४९ ऊनपञ्चाशत्
५० पञ्चाशत्
५१ एकपञ्चाशत्
५२ द्वापञ्चाशत्
५३ त्रिपञ्चाशत्
५४ चतुष्पञ्चाशत्
५५ पञ्चपञ्चाशत्
५६ षट्पञ्चाशत्
५७ सप्तपञ्चाशत्
५८ अष्टपञ्चाशत्
५९ ऊनषष्टि :
६० षष्टि :
६१ एकषष्टि :
६२ द्विषष्टि :
६३ त्रिषष्टि :
६४ चतुष्षष्टि :
६५ पञ्चषष्टि :
६६ षट्षष्टि :
६७ सप्तषष्टि :
६८ अष्टषष्टि :
६९ ऊनसप्तति :
७० सप्तति :
७१ एकसप्तति :
७२ द्विसप्तति :
७३ त्रिसप्तति :
७४ चतुस्सप्तति :
७५ पञ्चसप्तति :
७६ षट्सप्तति :
७७ सप्तसप्तति :
७८ अष्टसप्तति :
७९ ऊनाशीति :
८० अशीति :
८१ एकाशीति :
८२ द्व्यशीति :
८३ त्र्यशीति :
८४ चतुरशीति :
८५ पञ्चाशीति :
८६ षडशीति :
८७ सप्ताशीति :
८८ अष्टाशीति :
८९ ऊननवति :
९० नवति :
९१ एकनवति :
९२ द्विनवति :
९३ त्रिनवति :
९४ चतुर्नवति :
९५ पञ्चनवति :
९६ षण्णवति .
९७ सप्तनवति :
९८ अष्टनवति :
९९ ऊनशतम्
१०० शतम् ॥

४

## वैदिकानि सङ्ख्यास्थानानि

| | |
|---|---|
| एकम् | १ |
| दश | १० |
| शतम् | १०० |
| सहस्रम् | १००० |
| अयुतम् | १०००० |
| नियुतम् | १००००० |
| प्रयुतम् | १०००००० |
| अर्बुदम् | १००००००० |
| न्यर्बुदम् | १०००००००० |
| समुद्रः | १००००००००० |
| मध्यम् | १०००००००००० |
| अन्तः | १००००००००००० |
| परार्धः | १०००००००००००० |

## पौराणिकानि प्रचलितानि सङ्ख्यास्थानानि

| | |
|---|---|
| एकम् | १ |
| दश | १० |
| शतम् | १०० |
| सहस्रम् | १००० |
| अयुतम् | १०००० |
| लक्षम् (नियुतम्) | १००००० |
| प्रयुतम् | १०००००० |
| कोटिः | १००००००० |
| अर्बुदम् | १०००००००० |
| अब्जम् | १००००००००० |
| खर्वम् | १०००००००००० |
| निखर्वम् | १००००००००००० |
| शङ्कुः | १०००००००००००० |
| पद्मम् | १००००००००००००० |
| समुद्रः | १०००००००००००००० |
| अन्त्यम् | १००००००००००००००० |
| मध्यम् | १०००००००००००००००० |
| परार्धम् | १००००००००००००००००० |

## ५

# गुणन-सारणी

२×१=२ द्वे सकृद् द्वे
२×२=४ द्वे द्विश् चत्वारि
२×३=६ द्वे त्रिष् षट्
२×४=८ द्वे चतुरष्ट
२×५=१० द्वे पञ्चकृत्वो दश
२×६=१२ द्वे षट्कृत्वो द्वादश
२×७=१४ द्वे सप्तकृत्वश् चतुर्दश
२×८=१६ द्वे अष्टकृत्वष् षोडश
२×९=१८ द्वे नवकृत्वोऽष्टादश
२×१०=२० द्वे दशकृत्वो विंशतिः।

३×१=३ त्रीणि सकृत् त्रीणि
३×२=६ त्रीणि द्विष् षट्
३×३=९ त्रीणि त्रिर् नव
३×४=१२ त्रीणि चतुर् द्वादश
३×५=१५ त्रीणि पञ्चकृत्व : पञ्चदश
३×६=१८ त्रीणि षट्कृत्वोऽष्टादश
३×७=२१ त्रीणि सप्तकृत्व एकविंशति
३×८=२४ त्रीणि अष्टकृत्वश् चतुर्विंशति :
३×९=२७ त्रीणि नवकृत्वस् सप्तविंशति :
३×१०=३० त्रीणि दशकृत्वस् त्रिंशत् ।

४×१=४ चत्वारि सकृच् चत्वारि
४×२=८ चत्वारि द्विरष्ट
४×३=१२ चत्वारि त्रिर् द्वादश
४×४=१६ चत्वारि चतुष् षोडश
४×५=२० चत्वारि पञ्चकृत्वो विंशति :
४×६=२४ चत्वारि षट्कृत्वश् चतुर्विंशति:
४×७=२८ चत्वारि सप्तकृत्वोऽष्टाविंशति:
४×८=३२ चत्वारि अष्टकृत्वो द्वात्रिंशत्
४×९=३६ चत्वारि नवकृत्वष् षट्त्रिंशत्
४×१०=४०चत्वारि दशकृत्वश्चत्वारिंशत् ।

५×१=५ पञ्च सकृत् पञ्च
५×२=१० पञ्च द्विर् दश
५×३=१५ पञ्च त्रि : पञ्चदश
५×४=२० पञ्च चतुर् विंशति :
५×५=२५ पञ्च पञ्चकृत्व : पञ्चविंशति :
५×६=३० पञ्च षट्कृत्वस् त्रिंशत्
५×७=३५ पञ्च सप्ताकृत्व : पञ्चत्रिंशत्
५×८=४० पञ्चाऽष्टकृत्वश् चत्वारिंशत्
५×९=४५ पञ्च नवकृत्व : पञ्चचत्वारिंशत्
५×१०=५० पञ्च दशकृत्व : पञ्चाशत् ॥

६

# मानपरिभाषा :

(१) पौतवम् ( तुलामानम्=उन्मानम् )

अष्टभि : (८) गौरसर्षपै : — एक : (१) यव :
त्रिभि : (३) यवै:— एका (१) गुन्जा (एकं कृष्णलम्)
पन्चभि : (५) गुन्जाभि : — एक : (१) माषक :
चतुर्भि : (४) माषकै : — एक : (१) शाण : ( टङ्क : )
द्वाभ्याम् (२) शाणाभ्याम् — एक : (१) वटक : ( कोल : )
द्वाभ्याम् (२) वटकाभ्याम् — एक : (१) कर्ष : (अक्ष:)
एकेन (१) ताम्रकर्षेण — एक : (१) पण :
एकेन (१) सुवर्णकर्षेण - एक: (१) सुवर्ण : (सुवर्णपण विम्त)
[शतेन (१००) कृष्णलै : — एकम् (१) शतमानम् ]
द्वात्रिंशता (३२) रजतकृष्णलै : — एक : (१) पुराण :
चतुर्भि : (४) कर्षै : — एकम् (१) पलम् ।
द्विसप्तत्या (७२ ) कर्षै: — एक : (१) सेर :
चत्वारिंशता (४०) सेरै : —एक : (१) मण :
शतेन (१००) रक्तिकाभि : — एक : (१) तोलक :
[एकादशभिश् चणकै : षट्षष्ट्या च शततमैश्चणकस्य (११$\frac{६६}{१००}$ ) — एक : (१) तोलक :]
सप्तविंशत्या (२७) तोलकै : — एक : (१) सेटक :
द्वाभ्यां शताभ्यां षोडशभिश्च (२१६) तोलकै : —एका धारणी
[पन्चाशीत्या (८५) तोलकै : — एकं (१) साहस्रकम् ( कीलकम् )] ।

(२) द्रवयम् ( भरणमानम् )

द्वाभ्याम् (२) कर्षाभ्याम् — एका (१) शुक्तिका
द्वाभ्याम् (२) शुक्तिकाभ्याम् — एका (१) मुष्टि :
द्वाभ्याम् (२) मुष्टिभ्याम् — एका (१) प्रसृति :
द्वाभ्याम् (२) प्रसृतिभ्याम् — एक : (१) अन्जलि : ( कुडव : )
द्वाभ्याम् (२) अन्जलिभ्याम् — एक : (१) शराव : ( एका मानिका )
द्वाभ्याम् (२) शराबाभ्याम — एक : (१) प्रस्थ :
चतुर्भि : (४) प्रस्थै : — एक : (१) आढक :
चतुर्भि : (४) आढकै : — एक : (१) द्रोण :
[दशभि : (१०) मुष्टिभि : — एक : (१) मानक :
अष्टभि : (८) मानकै : — एका (१) प्रस्थिका
विंशत्या (२०) प्रस्थिकाभि : — एका (१) मुरिका]
[पादोनाभ्यां द्वाभ्याम् (१$\frac{३}{४}$) मानकाभ्याम् — एकम् (१) लातृकम् (लिटरम्)।]

## (३) पाय्यम् ( देशमानम् )

अष्टभि : (८) यवमध्यै : — एक : (१) अङ्गुल :
द्वादशभि : (१२) अङ्गुलै : — एक : (१) वितस्ति :
द्वाभ्याम् (२) वितस्तिभ्याम् — एक : (१) अरत्नि :
[द्वात्रिंशता (३२) अङ्गुलै : — एक : (१) किष्कु :
चतुष्पञ्चाशता (५४) अङ्गुलै : — एकम् (१) मातृकम् ( मिटरम् )]
सप्तभि : (७) वितस्तिभि : — एक : (१) व्याम : ( एकं रज्जुमानम् )
चतुर्भि : (४) हस्तै : — एक : (१) दण्ड :
दशभि : (१०) दण्डै : — एका (१) रज्जु :
सहस्रेण (१०००) दण्डै : — एक : (१) क्रोश :
द्वाभ्याम् (२) क्रोशाभ्याम् — एका (१) गव्यूति :
द्वाभ्याम् (२) गव्यूतिभ्याम् — एकम् (१) योजनम् ।

## (४) कालमानम्

अष्टादशभि : (१८) निमेषै : — एका (१) काष्ठा
त्रिंशता (३०) काष्ठाभि : — एका (१) कला
तिसृभि : (३) कलाभि : — एकम् (१) पलकम् ( २४ सेकेण्डा : )
त्रिंशता (३०) कलाभि : — एक : (१) क्षण :
षड्भि : (६) क्षणै : — एका (१) घटिका ( एको दण्ड : )
[षष्ट्या (६०) पलै : — एका (१) घटिका ]
द्वाभ्याम् (२) घटिकाभ्याम् — एक : (१) मुहूर्त :
त्रिंशता (३०) मुहूर्तै : — एक : (१) अहोरात्र :
[षष्ट्या (६०) घटिकाभि : — एक : (१) अहोरात्र :]
दिनस्य रात्रेर् वा चतुर्थेन अंशेन ($\frac{1}{4}$)— एक : (१) प्रहर : ( याम : )
[सार्धाभ्याम् (२$\frac{1}{2}$)पलाभ्याम् — एक : (१) मिनिट :
सार्धाभ्याम् (२$\frac{1}{2}$) घटिकाभ्याम् — एका (१) घण्टा ।]

७

## वारा :

वारा : सप्त भवन्ति–

आदित्यवार :, सोमवार :, मङ्गलवार :, बुधवार :, बृहस्पतिवार :, शुक्रवार :, शनैश्चरवार : इति ।

८

## तिथय :

शुक्लपक्षे पञ्चदश तिथय : भवन्ति–

प्रतिपत्, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमी, अष्टमी, नवमी, दशमी, एकादशी, द्वादशी, त्रयोदशी, चतुर्दशी, पूर्णिमा इति ।

कृष्णपक्षे अपि पञ्चदश तिथय : भवन्ति–

प्रतिपत्, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमी, अष्टमी, नवमी, दशमी, एकादशी, द्वादशी, त्रयोदशी, चतुर्दशी, अमावास्या इति ।

९

## पक्षौ

चान्द्रमासे शुक्लपक्ष : कृष्णपक्षश्च इति द्वौ पक्षौ भवत :।

१०

## मासा :

चान्द्रमासा : द्वादश भवन्ति–

चैत्र :, वैशाख :, ज्येष्ठ : ( ज्यैष्ठ : ), आषाढ :, श्रावण :, भाद्र : ( भाद्रपद : ), आश्विन : ( आश्वयुज : ), कार्तिक :, मार्गशीर्ष :, पौष :, माघ :, फाल्गुन : इति ।

सौरमासा : द्वादश भवन्ति–

मधुश् च, माधवश् च, शुक्रश् च, शुचिश् च, नभाश् च, नभस्यश् च, इषश् च, ऊर्जश् च, सहाश् च, सहस्यश् च, तपाश् च, तपस्यश् च इति ।

११

## ऋतव :

एकस्मिन् वर्षे षट् ऋतव : भवन्ति–

वसन्त :, ग्रीष्म :, वर्षा :, शरत्, हेमन्त :, शिशिर : इति ।

## १२
## अयने

एकस्मिन् वर्षे द्वे अयने भवत : – उत्तरायणम् दक्षिणायनम् चेति ।

## १३
## वर्षम्

द्वादशानां मासानां षण्णामृतूनां द्वयोरयनयोरेकं वर्षम् भवति ।

## १४
## युगम्

वैदिके कालमाने पञ्चानां वर्षाणाम् एकं युगं भवति । तेषां पञ्चानां वर्षाणां पृथक्पृथक् नामानि अपि सन्ति । तानि च क्रमेण एतानि सन्ति– संवत्सर :, परिवत्सर :, इदावत्सर :, इद्वत्सर :, वत्सर : इति ।

लोके तु प्रायेण अन्यादृशानि एव चत्वारि युगानि प्रसिद्धानि सन्ति । तानि च एतानि सन्ति– सत्ययुगम् , त्रेतायुगम् , द्वापरयुगम् , कलियुगम् चेति ।

## १५
## नक्षत्राणि

नक्षत्राणि सप्तविंशति : सन्ति–

अश्वयुजौ, अपभरण्य :, कृत्तिका :, रोहिणी, मृगशीर्षम् , आर्द्रा, पुनर्वसू , पुष्य :, अश्लेषा :, मघा :, पूर्वफल्गुन्यौ, उत्तरफल्गुन्यौ, हस्त :, चित्रा, स्वाति :, विशाखे, अनुराधा :, ज्येष्ठा, मूलबर्हणि :, पूर्वाषाढा :, उत्तराषाढा :, (अभिजित्), श्रवण : श्रविष्ठा : ( धनिष्ठा : ), शतभिषक्, पूर्वभद्रपदे, उत्तरभद्रपदे, रेवती इति ।

## १६
## राशय :

राशय : द्वादश सन्ति–

मेष :, वृष :, मिथुनम् , कर्कट :, सिंह :, कन्या, तुला, वृश्चिक :, धनु :, मकर :, कुम्भ :, मीन : इति ।

✪

# प्रार्थना

"व्यावहारिकं संस्कृतम्" इत्यस्याः पाठ्यपुस्तकमालायाः द्वितीयम् , तृतीयम् , चतुर्थम् , पञ्चमञ् च पाठ्यपुस्तकं प्रकाशयितुं सात्त्विकं दानं दातुं वैदिकधर्मसंस्कृति–संस्कृतशिक्षा–प्रेमिणो महानुभावान् सानुनयं प्रार्थयते–

स्वाद्ध्यायशालाकुटुम्बम् ।

---

**स्वाद्ध्यायशालायाः प्रकाशिताः संस्कृतग्रन्थाः –**

(१) **कौण्डिन्न्यायनशिक्षा–** (प्रातिशाख्यादिसर्वसंस्कृतशिक्षाग्रन्थसमीक्षागर्भा महाशिक्षा, आचार्यकौण्डिन्न्यायनेन रचिता, वाराणसीस्थसम्पूर्णानन्दसंस्कृत-विश्वविद्यालयेन वाचस्पतिः (डि.लिट्.) इत्युपाधये स्वीकृता, २०४९)- नै.रू. ६६०।-

(२) **वेदभाषानिघण्टुः** (कौण्डिन्न्यायनकोषः) भूलोककाण्डान्तर्गतदेववर्गब्रह्मवर्गात्मकस् सप्रस्ताविकश् शब्दानुक्रमणिकासहितो निदर्शनरूपः, वैदिकलौकिकशब्दानां सङ्ग्रहेण अमरकोषशैल्याम् आचार्यकौण्डिन्न्यायनेन रचितः (२०५०)- नै.रू. ४०।-

(३) **काव्यप्रकाशविवृतिः हैमवती** (संस्कृतभाषामयी) - आचार्यकौण्डिन्न्यायनकृता (मोतीलालबनारसीदासेन वाराणस्यां प्रकाशिता, १९८०)- भा.रू ८०।-

(४) **कतिपयनैपालसंस्कृतग्रन्थकारपरिचयः** (२०४८)- नै.रू. ४०।-

(५) **भारतवर्षबहिर्गमनादिदुरितप्रायश्चित्तव्यवस्था** (२०४९)- नै.रू. ४०।-

(६) **व्यावहारिकं संस्कृतम्** - (प्रथमम् पुस्तकम् , २०५०) - नै. रू. २०।-